# कात्यायन-गृह्यसूत्रम्




सम्पादकः—

युधिष्ठिरो मीमांसकः

# प्रकाशकीय वक्तव्य

अद्य यावत् अमुद्रित कात्यायन-गृह्यसूत्र को रामलाल कपूर ट्रस्ट (बहालगढ़) की ओर से प्रथम वार प्रकाशित किया जा रहा है। ऋषि दयानन्द ने अपनी संस्कारविधि के प्रथम संस्करण (सं० १९३२ वि०) में इस गृह्यसूत्र के लम्बे-लम्बे उद्धरण दिये हैं। कर्णवेध संस्कार का उल्लेख, तो केवल इसी गृह्यसूत्र में उपलब्ध होता है। इसके हस्तलेख भी प्रायः कठिनाई से उपलब्ध होते हैं। श्री पं० युधिष्ठिरजी मीमांसक ने पूना से इस ग्रन्थ के हस्तलेख प्राप्त करके इस का सम्पादन किया है।

इस ग्रन्थ को प्रकाशित करने के लिये निम्न महानुभावों ने आर्थिक सहायता दी है—

१—श्री चौ० कृष्ण भाटिया, श्रीमती ईश्वर भाटिया,
नई दिल्ली (स्वर्गीय पुत्र राकेश की स्मृति में) २१००—००

२—श्री महता रामकृष्ण जी, पत्नी सीतादेवी जी, २१००—००
द्वारा श्री ठाकरदास जी भाटिया (करनाल) ————

योग ४२००—००

यह रकम रा० सा० श्री चौ० प्रतापसिंह जी (करनाल) के सत्प्रयत्न से प्राप्त हुई है। इस के लिये सभी दानदाता महानुभावों तथा श्री चौ० प्रतापसिंह जी का हम रा० ला० कपूर ट्रस्ट की ओर से धन्यवाद करते हैं।

प्यारेलाल कपूर
मन्त्री रामलाल कपूर ट्रस्ट
बहालगढ़ (सोनीपत)

# अस्मिन् संस्करण उपयुक्तानां कोशानां

## परिचयः

कात्यायन-गृह्यसूत्रस्यास्य संस्करणस्य निष्पादनायास्माभिर्ये हस्त-लिखिता मुद्रिताश्च ग्रन्था उपयुक्तास्तेषां विवरणम्—

क—श्रीमद्दयानन्दसरस्वतीस्वामिभिर्विरचितस्य संस्कारविधेः प्रथमसंस्करणे (सं० १९३२ वि०) कात्यायनगृह्यसूत्रस्य ये पाठाः 'पारस्कर-गृह्यसूत्र'[1] 'पारस्कर-कात्यायन-गृह्यसूत्र'[2] 'यजुर्वेदीय-गृह्यसूत्र'[3] इति नामभिरुद्धृतास्तेषामिह निर्देशः 'क' संज्ञया विहितः ।

श्रीमद्दयानन्दसरस्वतीस्वामिभिः कात्यायनगृह्यसूत्रस्येमे पाठाः कस्मान्मुद्रिताद् हस्तलिखिताद् ग्रन्थाद्वोद्धृता इति न ज्ञायते सम्प्रत्यस्माभिः । संस्कारविधेः पुनः संशोधितस्य संस्करणस्य (सं० १९४० वि०) संस्कार-चान्द्रिकानाम्न्या व्याख्याया विरचयित्राऽऽत्मारामेण कर्णवेध-संस्कारप्रकरण इत्थमभ्यधायि—

'मुम्बईनगरवासिनो जेष्ठाराम-मुकुन्दजी इति नाम्नः सकाशादस्माभिः कात्यायनगृह्यसूत्रस्य यत्पुस्तकं क्रीतं, तस्य पारस्करगृह्यसूत्रान्तर्गतान्येव कात्यायनगृह्यसूत्राणि " " चिह्नान्तर्गतानि मुद्रितान्युपलब्धानि' ।

संस्करणमिदं पत्रात्मकं मुद्रितमासीदिति संस्कारचान्द्रिकायाः कर्तुरुत्तरलेखेन प्रतीयते । इदं संस्करणमस्माभिर्नोपलब्धम् । श्रीमद्दयानन्दसरस्वतीस्वामिभिर्ये पाठा उद्धृतास्तेषु पारस्कर-गृह्यसूत्रादधिके कात्यायनपाठे कण्डिकासंख्याः क्रमश एव निर्दिष्टा उपलभ्यन्ते । अतोऽनुमीयते स्वामिदयानन्दपादैः कश्चित् कात्यायनगृह्यसूत्रस्य स्वतन्त्र एव मुद्रितो हस्तलिखितो वा ग्रन्थस्तत्रोपयुक्तः स्यात् ।

ख—पूनानगरस्थायाः 'भारत—इतिहास—संशोधन-मण्डल' इत्याख्यायाः संस्थाया हस्तलेखसंग्रहस्थोऽयं कोशः । अयं तदीयहस्तलेख-

---

१. पृष्ठ १९, २३, २९, ३७, इत्यादि ।

२. पृष्ठ १६ ।

३. पृष्ठ १३ ।

सूचीपत्रे ८५ तमे पृष्ठे "३२, ६७ गृह्यपरिशिष्टम् । कात्यायनोक्तम्" इत्येवं निर्दिष्टोऽस्ति । यद्यपि सूचीपत्रे 'गृह्यपरिशिष्टम्' इत्युक्तम्, तथाऽप्ययं कात्यायनगृह्यसूत्रस्य कोशः एव ।

ग—उक्तसंस्थाया एवायं हस्तलेखः । तदीयहस्तलेखसूचीपत्रे ८५ तमे पृष्ठे "३२,३२ गृह्यसूत्रम् । कात्यायनः ।... श० १७१६ पिंगलः मार्गशीर्षः व ५ ।" इत्येवं पाठ उपलभ्यते । अयं हस्तलेखः परिशिष्टानि विहाय तृतीयकाण्डान्तं यावत् सम्पूर्णमस्ति । अस्य हस्तलेखस्य प्रथमद्वितीयतृतीयकाण्डानामन्त इत्थं पाठ उपलभ्यते—

प्रथमकाण्डान्ते—**इति कात्यायनसूत्रे प्रथम काण्ड समाप्तः ।**

द्वितीयकाण्डान्ते—**इति कात्यनगृह्यसूत्रे द्वितीय वाण्डः समाप्तः ।**

तृतीयकाण्डान्ते—**इति कात्यायन पारस्कर विरचिते गृह्यसूत्रे माध्यन्दिनीये तृतीयकाण्डः समाप्तः । सके सत्रासे १६ पिंगलनम संवत्सरे मार्गेश्चर नद्व पंचपेमि समरत्सः ।।**

अस्मिन् हस्तलेखे द्वितीयकाण्डेऽत्र मुद्रिता सप्तमी कण्डिका, न पठ्यते, तृतीयकाण्डे चात्रमुद्रिता पञ्चमी कण्डिका काण्डान्ते पठ्यते ।

घ—अयमपि हस्तलेख उक्तसंस्थाया एव । तदीयहस्तलेखसूचीपत्रे ८५ तमे पृष्ठे "३६,१४२ गृह्यसूत्रम् कात्यायनः ।...त्रु' इत्येवं संकेतितोः वर्तते । अयं हस्तलेखो द्वितीयकाण्डं यावत् वर्तते । अत्र प्रथम-द्वितीयकाण्डयोरन्त इत्थं पाठ उपलभ्यते—

प्रथमकाण्डान्ते—**इति श्रीपारस्करविरचिते माध्यन्दिने गृह्यसूत्रे प्रथमकाण्डं समाप्तम् ।**

द्वितीयकाण्डान्ते—**इति कात्यायनकृते गृहे सूत्रे द्वितीयकाण्डं समाप्तम् ।**

अस्मिन् हस्तलेखे प्रथमकाण्डस्य त्रयोदशी-चतुर्दश्यौ कण्डिके विपर्ययेण पठ्यते ।

ङ—अयमप्युक्तसंस्थाया एव हस्तलेखः । तदीयहस्तलेखसूचीपत्रे ५६ तमे पृष्ठे "३२, ८ कात्यायनगृह्यसूत्रम् । कात्यायनः" इत्येवं निर्दिष्टोऽस्ति । यद्यप्यस्य हस्तलेखस्यान्तिमे पत्रे "**श्रीमत्कात्यायनगृह्यसूत्रे प्रथमं काण्डं समाप्तम् सांवत्सरिकस्य चूडाकरणं तृतीधं वाऽप्रतिहते षोड**" पङ्क्तिर्दृश्यते, तथापीदं पारस्करगृह्यसूत्रनाम्ना

प्रसिद्धस्यैव गृह्यसूत्रस्य कोशः, तदनुसारमेव काण्डसमाप्तिर्दर्शनात् । अस्मिन् कोशे षष्ठी कण्डिका पञ्चमकण्डिकान्तर्भूता एव पठ्यत इत्यतोऽग्रे सर्वत्र कण्डिकासंख्यैका न्यूनीभूतोपलभ्यते ।

च—वाराणसीस्थात् 'चौखम्वा संस्कृत सीरिज आफिस' इति नाम्नः प्रकाशनगृहात् १९९५ तमे वैक्रमाब्दे प्रकाशितम् अनन्तराम-डोगराशास्त्रिण्णा सम्पादितं मूलमात्रं पारस्करगृह्यसूत्रम् । अस्मिन् संस्करणे पारस्करगृह्यसूत्रापेक्षया कात्यायनगृह्यसूत्रे यावत्यः कण्डिका अधिका उपलभ्यन्ते ताः सर्वाः (   ) कोष्ठके मुद्रिता सन्ति । कण्डिकासंख्या तु सर्वत्र क्रमिका एव निर्दिश्यते । तेनायं कात्यायन-स्यैव संस्करणमिति शक्यते वक्तुम् । अत्र बह्व्य उपयोगिन्यष्टिप्पण्यः परिशिष्टाश्च निविष्टा वर्तन्ते ।

छ—मुम्बईस्थे श्रीवेङ्कटेश्वर-मुद्रणालये मुद्रितं कर्काचार्यादि-कृतभाष्यपञ्चकयुतम् १९८६ वैक्रमाब्दे प्रकाशितं पारस्करगृह्य-सूत्रम् । अत्रान्ते भोजनसूत्रं विहायान्यानि कात्यायनीय-परिशिष्टानि सव्याख्यानानि मुद्रितानि सन्ति ।

च-छ संज्ञकयोः कोशयोस्त्रिचतुरेषु स्थानेषु पारस्करगृह्यसूत्रे ऽपठितः कात्यायनगृह्ये च पठितः पाठो यथास्थानं (   )कोष्ठके पठ्यते । यथा द्वितीयकाण्डस्य द्वितीयकण्डिकायामुपनयनप्रकरणे तूष्णीं वा ॥१०॥ इत्यस्मादग्रे दण्डं प्रयच्छयति ॥११॥ इत्यतः पूर्वं 'यज्ञोपवीतं परमं पवित्रं ''अजिनं दधेऽहमिति' इत्यंशः (   ) कोष्ठके पठ्यते । अत्र व्याख्याने जयराम इममुपशाखीयं मन्त्रं स्वीकरोति। गदाधरविश्वनाथावपीमं मन्त्रं शाखान्तरीयमेवाहतुः ।

—:०:—

# उपोद्घातः

कल्पसूत्राणां षट्सु वेदाङ्गेषु द्वितीयं स्थानं वर्तते । तानि च वेदार्थपरिज्ञानाय हस्तस्थानानि[1] । यथा हस्ताभ्यां किमपि वस्तुजातमादीयते शरीरं च रक्ष्यते तथैव कल्पसूत्रैर्वेदस्य याज्ञिकोऽर्थः स्पष्टं परिज्ञायते वेदश्च परिरक्ष्यते । यज्ञानां सृष्टियज्ञमूलत्वाद् याज्ञिकार्थसाहाय्येन मन्त्राणामाधिदैविकार्थोऽधिगम्यते । आधिदैविकेऽर्थे परिज्ञाते **यत्पिण्डे तद् ब्रह्माण्डे इति वचनात्** योऽयं मन्त्राणां गूढतमः प्राधान्येन तेषां लक्ष्यभूत आध्यात्मिकोऽर्थः सोऽवबोद्धुं शक्यते । एतच्च **अधेन्वा चरति माययैष वाचं शुश्रुवाँ अफलामपुष्पाम्** (ऋ० १०।७१।५) इत्यर्धर्चं विवृण्वता भगवता यास्केनैवं प्रत्यपादि—

**अर्थं वाचः पुष्पफलमाह । याज्ञदैवते पुष्पफले । देवताध्यात्मे वा ।** निरुक्त १।२०।।

**कल्पसूत्राणां त्रयो भागाः**—कल्पसूत्राणां श्रौतसूत्रम्, गृह्यसूत्रम्, धर्मसूत्रं चेति त्रयो भागाः सन्ति । तत्र श्रौतसूत्रेषु श्रुतौ (संहिता-ब्राह्मणयोः) साक्षाद् विहितानाम् आहवनीय-गार्हपत्य-दक्षिणाग्निषु क्रियमाणानां यज्ञानां प्रक्रियोच्यते । गृह्यसूत्रेषु आवसथ्याग्नौ (गृह्याग्नौ) क्रियमाणानां गृहस्थैरवश्यं करणीयानां संस्कारादिकर्मणां विधिर्विधीयते । धर्मसूत्रेषु चतुर्णां वर्णानाम् आश्रमाणां च धर्मः (कर्तव्यरूपं कर्म) निर्दिश्यते । श्रौतसूत्रेष्वेव शुल्बसूत्राणामप्यन्तर्भावो ज्ञेयः । इमानि कल्पसूत्राणि प्रतिवेदं प्रतिशाखं च भिद्यन्ते । प्राचीनग्रन्थानामुच्छेदाद् अल्पीयांस्येव तथाभूतानि कल्पसूत्राण्युपलभ्यन्ते येषामिमे त्रयोऽपि भागा विद्यन्ते ।

**शुक्लयजुषां कल्पसूत्रम्**—शुक्लयजुषां कात्यायनप्रोक्तं श्रौतसूत्रम् पारस्कर-कात्यायन-नाम्नी द्वे गृह्यसूत्रे उपलभ्येते । कात्यायनस्मृतिरपि प्राप्यते, परन्तु न सा प्राचीना कात्यायनमुनिप्रोक्ता । कात्यायनीयेन धर्मसूत्रेण तु आपस्तम्बबौधायनादिधर्मसूत्रवत् सूत्रबद्धेन भाव्यम् ।

---

१. हस्तौ कल्पोऽथ पठ्यते । पाणिनीया श्लोकात्मिका शिक्षा ।

**अनेके कात्यायनाः**—प्राचीनवैदिकवाङ्मये बहूनां कात्यायनानां निर्देश उपलभ्यते । तत्रैकः कात्यायनः कौशिकः,अपर आङ्गिरसः,अन्यो भार्गवः, इतरो द्वयामुष्यायणः । चरकसंहितायाः सूत्रस्थाने (१।१०) प्येकः कात्यायनः स्मर्यते । अयमायुर्वेदीयशालाक्यतन्त्रस्य प्रवक्ता ऽभूत् ।[1] परमनीतिविशारदेन चाणक्येनापि स्वीयेऽर्थशास्त्रे समयाचार-प्रकरणे (अधि० ५, अ० ५) कश्चित् कात्यायनो निर्दिश्यते । स्कन्द-पुराणस्य नागरखण्डे (१३०।७१) ऽप्येको याज्ञवल्क्यपुत्रः कात्यायनः स्मर्यते । तदेतेषु कतमः कात्यायनः कातीयस्य कल्पसूत्रस्य प्रवक्तेति विचार्यते ।

**कातीयकल्पस्य प्रवक्ता याज्ञवल्क्यपुत्रः**—स्कन्दपुराणस्य नागर-खण्डे १३० तमे ऽध्याये ७१ तमे श्लोके'याज्ञवल्क्यपुत्रः कात्यायनो वेद-सूत्रस्य प्रवक्ता' इति निर्दिश्यते ।[2] तत्रैव कात्यायनस्य **यज्ञविद्यावि-चक्षण** इति विशेषणमप्युपलभ्यते ।[3] एतेन ज्ञायते याज्ञवल्क्यस्य यः कात्यायनाभिधः पुत्रः स एव श्रौतगृह्यसूत्राणां प्रवक्ताऽऽसीदिति ।

**श्रौत-गृह्यसूत्राणां प्रवचनकालः**—य एव आचार्या शाखा-ब्राह्मणा-रण्यकानां प्रवक्तारस्त एव कल्पसूत्राणामिति निश्चितो भारतीयेतिहासे राद्धान्तः । वैदिक-शाखानामन्तिमं प्रवचनं भगवतः कृष्णद्वैपायनस्य शिष्यप्रशिष्यादिभिः कृत इत्यप्यैतिह्यसिद्धं तथ्यम् । ब्रह्मिष्ठो याज्ञ-वल्क्यः कृष्णद्वैपायनशिष्यस्य वैशंपायनस्य शिष्य आसीदित्यपीतिहास-प्रसिद्धा वार्ता । तस्माद् याज्ञवल्क्यो भारतयुद्ध[4]समकालिको वैक्रमाब्दा-दुपत्रिसहस्रवर्षपूर्वतनः । तत्पुत्रत्वात् कातीयश्रौतगृह्यसूत्राणां प्रवक्ता कात्यायनोऽपि तत्समसामयिक एव । पाश्चात्त्यविद्वांसस्तदनुयायिनो-ऽपरीक्षितकारका भारतीयाश्च कात्यायनगृह्यसूत्रस्य कालं ख्रीस्ताब्दात्

---

१. अष्टाङ्गहृदय, वाग्भट्टविमर्श, पृष्ठ १७ ।

२. कात्यायनसुतं प्राप्य वेदसूत्रस्य कारकम् ।

३. कात्यायनाभिधं च यज्ञविद्याविचक्षणम् । स्कन्द, नागर खण्ड, अ० १३१, श्लो० ४८ ।

४. भरतकुलोत्पन्नानां कौरवाणां पाण्डवानां यद् युद्धं बभूव, तस्य 'भारतम्' इति नाम । अत्र 'संग्रामे प्रयोजनयोद्धृभ्यः' इति पाणिनीयं सूत्रं (४।२।५६) तद्वृत्तिश्च द्रष्टव्या । महाभारत इति तु ग्रन्थस्य नाम, न संग्रामस्य ।

५५०–४५० प्राक् संगिरन्ते[1], तदविच्छिन्नभारतीयेतिहासकालगणनाया विरुद्धत्वात् सर्वथोपेक्षणीयम् ।

**शुक्लयजुषो द्वे गृह्यसूत्रे**—शुक्लयजुष एकं पारस्करगृह्यसूत्रं विविधभाष्यव्याख्यादियुतं प्रसिद्धम् । अपरं कात्यायन-गृह्यसूत्रं यत्र तत्र बहुत्रोद्धृतमुपलभ्यते । अस्यानेके कोशा अपि विभिन्नपुस्तकालयेषु समुपलभ्यन्ते । पारस्कर-गृह्यसूत्रं पारस्कराचार्य-प्रोक्तमिति कर्काद्याचार्या ब्रुवते । पारस्कर-गृह्यस्य व्याख्याता जयरामस्त्विदं कात्यायन-प्रोक्तं मनुते ।[2] पारस्कर-गृह्यसूत्रस्य केषुचिद् हस्तलेखेषु 'कत्यायनकृतम्' इति लिखितं दृश्यते । यथाऽस्माकीने 'ङ' संज्ञके कोशे प्रथमकाण्डान्ते दृश्यते—**श्रीमत्कात्यायनगृह्यसूत्रे प्रथमं काण्डं समाप्तम्** । कात्यायनगृह्यसूत्रं तु कात्यायनप्रोक्तमिति तन्नाम्नैव स्पष्टं व्यज्यते ।

**कोऽयं पारस्करः**—पारस्कर-गृह्यसूत्रस्य प्रवक्ता पारस्करनामा कात्यायनाद् भिन्न आचार्यः,उत पारस्कर-नाम्ना कात्यायन एवोच्यते ? एतस्मिन् विषयेऽस्माकं त्विदं मतं यत् कात्यायन इति याज्ञवल्क्यपुत्रस्य मातृसम्बन्धिनाम[3], पारस्कर इति तु तस्य व्यावहारिकं नाम । अपरे केचन पारस्कर इति देशनिमित्तजं नाम इति मन्वते । पारस्करनामा कतमो देश इति न सम्प्रति शक्यते याथातथ्येन वक्तुम् । भगवान् पाणिनिस्तु पारस्करादिगणे (६।१।१५०) **'पारस्करो देशे'** इत्येव पठति । ऋक्तन्त्रकारस्तु **'पार पर्वते'** (४।५।१०) इति ब्रुवन् पारस्करः पर्वतविशेष इति ज्ञापयति । सिन्धप्रदेशस्य **'थर पारकर'** इत्याख्यं मण्डलमेव पारस्करदेश इति वासुदेवशरणाग्रवालस्तर्कयामास ।[4] कात्यायनः पारस्करदेशीय इति न केनापि प्रमाणेन ज्ञायते । पारस्करगृह्यसूत्रमपि कात्यायनप्रोक्तमिति जयरामो महता कण्ठेनोद्घोषयति, पारस्करगृह्यस्य बहुष हस्तलेखेष्वपि **'कात्यायनकृते गृह्यसूत्रे'** इति पाठो दृश्यत इत्युक्तं पुरस्तात् । नैतावदेव, अपि तु कात्यायनगृह्यसूत्रस्य हस्तलेखेष्वपि **'पारस्करकृते'** इति

---

१. कल्पसूत्र, कुन्दनलालशर्मा, पृष्ठ ३०८, पं० १-२ ।

२. आदावन्ते—'कृतमिदं कातीयगृह्यस्य सद्भाष्यं सज्जनवल्लभम्' इति ।

३. याज्ञवल्क्यस्य द्वे भार्ये बभूवतुः—मैत्रेयी च कात्यायनी च । शत० १४।७।३।१।। ४. पाणिनिकालीन भारतवर्ष (हिन्दी सं० १) पृष्ठ ६६ ।

दृश्यते। यथाऽस्माकीने 'घ' संज्ञके कोशे प्रथमकाण्डान्ते 'इति पारस्करविरचिते' इति पठ्यते, द्वितीयकाण्डान्ते 'इति कात्यायनकृते'। आस्माकीने 'ग' संज्ञके कोशे तृतीयकाण्डान्ते तूभयं नाम सहैव पठ्यते। तद्यथा—**इति श्री कात्यायन-पारस्कर-विरचिते गृह्यसूत्रे माध्यन्दिनीये तृतीयकाण्डः समाप्तः।......**

अत उभयोर्गृह्यसूत्रयोः कोशेषु पारस्कर-कात्यायननाम्नोः सांकर्यदर्शनात् 'पारस्कर' इति कात्यायनस्यैवापरं नाम इत्येव युक्तियुक्तमवभाति।

**पारस्कर-कात्यायनगृह्यसूत्रयोः पाठभेदः**— पारस्करगृह्यसूत्रस्य प्रथमकाण्डे एकोनविंशतिः कण्डिकाः सन्ति, द्वितीयकाण्डे सप्तदश, तृतीयकाण्डे च पञ्चदश। कात्यायनगृह्यसूत्रस्य तु प्रथमकाण्डे चतुर्विंशतिः कण्डिका दृश्यन्ते, द्वितीयकाण्डे विंशतिः, तृतीयकाण्डे च षोडश। एवं कात्यायनगृह्य आहृत्य (५+३+१=९) नव कण्डिकाः पारस्करगृह्यादधिकाः पठ्यन्ते। याः कण्डिका पारस्करगृह्य उपलभ्यन्ते ताः सर्वाः कात्यायनगृह्येऽपि प्रायेण तथैवोपलभ्यन्ते।

उभयोर्गृह्यसूत्रयोरनया तुलनया शक्यते वक्तुं यदेकस्य गृह्यसूत्रस्यैव इमौ द्वावपि पाठौ स्तः। तत्र योऽसौ पारस्करगृह्यनाम्ना प्रसिद्धः पाठः, स तस्य लघुपाठः, यश्च कात्यायनगृह्यनाम्नाऽस्माभिः प्रसिद्धी क्रियते, स तस्य वृद्धपाठः। संस्कृतवाङ्मये सन्त्येतादृशा बहवो ग्रन्था येषां लघुवृद्धपाठावुपलभ्येते। यथा निघण्टुनिरुक्तयोः[1], पाणिनीयसूत्रपाठ धातुपाठयोः[2], सूत्रात्मिकायाः श्लोकात्मिकायाश्च पाणिनीयशिक्षायाः[3]।

**पारस्करगृह्येऽतिप्राचीनः पाठभ्रंशः**—पारस्करगृह्ये उपनयनकर्मणि **'अत्र यज्ञोपवीतपरिधानम्-यज्ञोपवीतं परमं पवित्रम्** इत्यारभ्य **'परीदं-**

---

१. द्र०—डा० लक्ष्मणस्वरूप-सम्पादितं निरुक्तम्।

२. संस्कृत व्याकरणशास्त्र का इतिहास (सं० २०३०) भाग १, पृष्ठ ३५०; भाग २, पृष्ठ ५८-६०।

३. सूत्रात्मिकायाः पाणिनीयशिक्षाया लघुवृद्धपाठावस्माभिः 'शिक्षासूत्राणि' इत्यत्र प्रकाशितौ। श्लोकात्मिकायाः शिक्षाया याजुषपाठो लघुपाठः, ऋक्पाठो वृद्धपाठ इति प्रसिद्ध एव।

**वाज्यनिनं दधेऽहं'** मित्यन्तः पाठो नोपलभ्यते। कात्यायनगृह्यसूत्रे त्वयं पाठो दृश्यते। तद्यथा—**युवा सुवासाः······देवयन्त इति वा ॥९॥ तूष्णीं वा ॥१०॥ अत्र यज्ञोपवीतपरिधानम्—यज्ञोपवीतं परमं ·· ·· यज्ञोपवीतेनोपनह्यामीति ॥११॥ अथाजिनं प्रयच्छति—मित्रस्य ·· दधेऽहमिति तूष्णीं वा ॥१२॥ दण्डं प्रयच्छति ॥१३॥** (काण्ड २, कं० ३, पृष्ठ २९)

अस्मिन् पाठे दशमद्वादशयोः सूत्रयोरुभयत्र **तूष्णीं वा** इति पाठस्य साम्याद् बहोः कालात् प्रागेव कस्यचिल्लेखकस्य दृष्टिस्खलनात् पाठो नष्टः स्यात्। पारस्करगृह्यव्याख्यातारः सर्वेऽप्यत्र यज्ञोपवीतपरिधानमाचक्षते।

**कात्यायन-परिशिष्टानि**—कात्यायननाम्ना बहूनि परिशिष्टान्युपलभ्यन्ते। तत्र कानिचित् श्रौतसूत्रस्य सन्ति, कानिचिद् गृह्यसूत्रस्य, कानिचित् प्रातिशाख्यस्य। तत्र बहूनि मुद्रितानि, बहूनि हस्तलेखरूपेणैवोपलभ्यन्ते।

मुद्रितेषु पारस्करगृह्यपुस्तकेष्वन्ते **वाप्यादिप्रतिष्ठापनसूत्रम्, शौचसूत्रम्, स्नानसूत्रम्, श्राद्धसूत्रम्, भोजनसूत्रम्** इत्येवं पञ्च परिशिष्टानि कात्यायनविरचितान्युपलभ्यन्ते। तेष्वादिमं वाप्यादिप्रतिष्ठापनसूत्रं कात्यायनगृह्यसूत्र एव तृतीयकाण्डे पञ्चमकाण्डिकारूपेण[1] पठ्यते। अत इहावशिष्टानि चत्वार्येव परिशिष्टानि मुद्रितानि। हस्तलेखेषु यत्र क्वचित् कण्डिकानां नैयूनाधिक्यं पौर्वापर्यं च दृश्यते। तत्सर्वमस्माभिस्तत्र तत्रटिप्पण्यां प्रकटीकृतम्।

**कात्यायन-गृह्यसूत्रस्य व्याख्या**—कात्यायन-गृह्यसूत्रस्य कतमाऽपि व्याख्या नास्माभिर्लब्धा। यत्र तत्र पुस्तकालयेषु कात्यायनगृह्यसूत्रस्य गदाधरव्याख्याया हस्तलेखाः श्रूयन्ते। न तेऽस्माभिर्दृष्टाः। अतो नैवास्माभिर्वक्तुं शक्यते यत् ते ते हस्तलेखाः कात्यायनगृह्यव्याख्यायाः सन्त्युत पारस्करगृह्यस्य। शोधकर्तृमहानुभावैरत्र प्रयासो विधेयः।

---

१. ग० संज्ञके कोशे तु तृतीयकाण्डान्ते पठ्यते। उभयथाऽपि तस्याः कात्यायनगृह्यसूत्रान्तर्गतत्वमेव

दृश्यते । यथाऽस्माकीने 'घ' संज्ञके कोशे प्रथमकाण्डान्ते '**इति पारस्करविरचिते**' इति पठ्यते, द्वितीयकाण्डान्ते '**इति कात्यायनकृते**' । अस्माकीने 'ग' संज्ञके कोशे तृतीयकाण्डान्ते तूभयं नाम सहैव पठ्यते । तद्यथा—**इति श्री कात्यायन-पारस्कर-विरचिते गृह्यसूत्रे माध्यन्दिनीये तृतीयकाण्डः समाप्तः ।**......

अत उभयोर्गृह्यसूत्रयोः कोशेषु पारस्कर-कात्यायननाम्नोः सांकर्य-दर्शनात् 'पारस्कर' इति कात्यायनस्यैवापरं नाम इत्येव युक्तियुक्त-मवभाति ।

**पारस्कर-कात्यायनगृह्यसूत्रयोः पाठभेदः**— पारस्करगृह्यसूत्रस्य प्रथमकाण्डे एकोनविंशतिः कण्डिकाः सन्ति, द्वितीयकाण्डे सप्तदश, तृतीयकाण्डे च पञ्चदश । कात्यायनगृह्यसूत्रस्य तु प्रथमकाण्डे चतुर्विंशतिः कण्डिका दृश्यन्ते, द्वितीयकाण्डे विंशतिः, तृतीयकाण्डे च षोडश । एवं कात्यायनगृह्य आहत्य (५+३+१=९) नव कण्डिकाः पारस्करगृह्यादधिकाः पठ्यन्ते । याः कण्डिका पारस्करगृह्य उपलभ्यन्ते ताः सर्वाः कात्यायनगृह्येऽपि प्रायेण तथैवोपलभ्यन्ते ।

उभयोर्गृह्यसूत्रयोरनया तुलनया शक्यते वक्तुं यदेकस्य गृह्यसूत्रस्यैव इमौ द्वावपि पाठौ स्तः । तत्र योऽसौ पारस्करगृह्यनाम्ना प्रसिद्धः पाठः, स तस्य लघुपाठः, यश्च कात्यायनगृह्यनाम्नाऽस्माभिः प्रसिद्धी क्रियते, स तस्य वृद्धपाठः । संस्कृतवाङ्मये सन्त्येतादृशा बहवो ग्रन्था येषां लघुवृद्धपाठावुपलभ्येते । यथा निघण्टुनिरुक्तयोः[1], पाणिनीयसूत्रपाठ धातुपाठयोः[2], सूत्रात्मिकायाः श्लोकात्मिकायाश्च पाणिनीयशिक्षायाः[3] ।

**पारस्करगृह्येऽतिप्राचीनः पाठभ्रंशः**—पारस्करगृह्ये उपनयनकर्मणि '**अत्र यज्ञोपवीतपरिधानम्-यज्ञोपवीतं परमं पवित्रम्** इत्यारभ्य '**परीदं-**

१. द्र०—डा० लक्ष्मणस्वरूप-सम्पादितं निरुक्तम् ।

२. संस्कृत व्याकरणशास्त्र का इतिहास (सं० २०३०) भाग १, पृष्ठ ३५०; भाग २, पृष्ठ ५८-६० ।

३. सूत्रात्मिकायाः पाणिनीयशिक्षाया लघुवृद्धपाठावस्माभिः 'शिक्षासूत्राणि' इत्यत्र प्रकाशितौ । श्लोकात्मिकायाः शिक्षाया याजुषपाठो लघुपाठः, ऋक्पाठो वृद्धपाठ इति प्रसिद्ध एव ।

**वाज्यनिनं दधेऽहं**' मित्यन्तः पाठो नोपलभ्यते। कात्यायनगृह्यसूत्रे त्वयं पाठो दृश्यते। तद्यथा—**युवा सुवासाः······देवयन्त इति वा** ॥९॥ **तूष्णीं वा** ॥१०॥ **अत्र यज्ञोपवीतपरिधानम्—यज्ञोपवीतं परमं ······ यज्ञोपवीतेनोपनह्यामीति** ॥११॥ **अथाजिनं प्रयच्छति—मित्रस्य ·· दधेऽहमिति तूष्णीं वा** ॥१२॥ **दण्डं प्रयच्छति** ॥१३॥ (काण्ड २, कं० ३, पृष्ठ २९)

अस्मिन् पाठे दशमद्वादशयोः सूत्रयोरुभयत्र **तूष्णीं वा** इति पाठस्य साम्याद् बहोः कालात् प्रागेव कस्यचिल्लेखकस्य दृष्टिस्खलनात् पाठो नष्टः स्यात्। पारस्करगृह्यव्याख्यातारः सर्वेऽप्यत्र यज्ञोपवीतपरिधानमाचक्षते।

**कात्यायन-परिशिष्टानि**—कात्यायननाम्ना बहूनि परिशिष्टान्युपलभ्यन्ते। तत्र कानिचित् श्रौतसूत्रस्य सन्ति, कानिचिद् गृह्यसूत्रस्य, कानिचित् प्रातिशाख्यस्य। तत्र बहूनि मुद्रितानि, बहूनि हस्तलेखरूपेणैवोपलभ्यन्ते।

मुद्रितेषु पारस्करगृह्यपुस्तकेष्वन्ते **वाप्यादिप्रतिष्ठापनसूत्रम्, शौचसूत्रम्, स्नानसूत्रम्, श्राद्धसूत्रम्, भोजनसूत्रम्** इत्येवं पञ्च परिशिष्टानि कात्यायनविरचितान्युपलभ्यन्ते। तेष्वादिमं वाप्यादिप्रतिष्ठापनसूत्रं कात्यायनगृह्यसूत्र एव तृतीयकाण्डे पञ्चमकाण्डिकारूपेण[1] पठ्यते। अत इहावशिष्टानि चत्वार्येव परिशिष्टानि मुद्रितानि। हस्तलेखेषु यत्र क्वचित् कण्डिकानां नैयूनाधिक्यं पौवापर्यं च दृश्यते। तत्सर्वमस्माभिस्तत्र तत्रटिप्पण्यां प्रकटीकृतम्।

**कात्यायन-गृह्यसूत्रस्य व्याख्या**—कात्यायन-गृह्यसूत्रस्य कतमाऽपि व्याख्या नास्माभिर्लब्धा। यत्र तत्र पुस्तकालयेषु कात्यायनगृह्यसूत्रस्य गदाधरव्याख्याया हस्तलेखाः श्रूयन्ते। न ते ऽस्माभिर्दृष्टाः। अतो नैवास्माभिर्वक्तुं शक्यते यत् ते ते हस्तलेखाः कात्यायनगृह्यव्याख्यायाः सन्त्युत पारस्करगृह्यस्य। शोधकर्तृमहानुभावैरत्र प्रयासो विधेयः।

---

१. ग० संज्ञके कोशे तु तृतीयकाण्डान्ते पठ्यते। उभयथाऽपि तस्याः कात्यायनगृह्यसूत्रान्तर्गतत्वमेव

**कातीय-गृह्य-कारिका**—कात्यायनगृह्यसम्बद्धा 'कातीयगृह्यकारिका' नामा ग्रन्थोऽप्युपलभ्यते । अस्य रचयिता सोमेश्वरयज्वनः पुत्रो रेणुदीक्षितः। अत एव इयं कारिका **रेणुकारिका** नाम्नापि व्यपदिश्यते । अस्या वैक्रमाब्दस्य चतुर्दशी शताब्दी कालः स्यादिति सम्भाव्यते । अस्य कारिकाग्रन्थस्य हस्तलेखा हस्तलेखसंग्रहेषु बहुत्रोपलभ्यन्ते ।

कात्यायनगृह्यसूत्रस्य ये हस्तलेखा पूनानगरस्थे भारत-इतिहास-संशोधन-मण्डले विद्यन्ते तेषां पाठसम्मेलनं नाम दुष्करं कर्म ब्र० धर्मवीरेण महताऽऽयासेन कृतम् । मुद्रणार्थं ग्रन्थस्य प्रतिलिपिकरणे मुद्रितपत्रसंशोधने चापि ब्र० धर्मवीरेण महत्साहाय्यमाचरितमिति तस्मायाशीर्वादः प्रदीयते ।

रामलाल कपूर ट्रस्ट
बहालगढ़ (सोनीपत-हरयाणा)

विदुषां वशंवदः—
युधिष्ठिरो मीमांसकः

—:०:—

# कात्यायन-गृह्यसूत्रस्य विषय-सूची

## प्रथम-काण्डम्


| पा० कं०[1] | का० कं०[1] | विषयः | पृष्ठम् |
|---|---|---|---|
| १ | १ | गृह्यस्थालीपाकानां परिसमूहनादीनि कर्माणि | ३ |
| २ | २ | आवसथ्याधानम् | ३ |
| ३ | ३ | अर्घप्रदानविधिः | ४ |
| ४ | ४ | विवाहः (वासःपरिधापनादिकर्म) | ६ |
| ५ | ५ | ,, (प्रदक्षिणादिकर्म) | ७ |
| ६ | ६ | ,, (लाजा-होमः) | ८ |
| ७ | ७ | ,, (अश्मारोहणम्) | ९ |
| ८ | ८ | ,, (सप्तपद्यादिकर्म) | १० |
| ९ | ९ | औपासनाग्नि-परिचरणम् | ११ |
| १० | १० | रथाक्षभेदे प्रायश्चित्तम् | ११ |
| ११ | ११ | चतुर्थीकर्म | १२ |
| १२ | १२ | पक्षादिकर्मणो(दर्शपूर्णमासेष्टिकर्मणो) विधानम् | १३ |
| × | १३ | जायाधिगमनम् | १४ |
| × | १४ | गर्भाधानम् | १४ |
| १३ | १५ | ,, (गर्भस्थित्यभावे कर्म) | १५ |
| १४ | १६ | पुंसवनम् | १६ |
| १५ | १७ | सीमन्तोन्नयनम् | १६ |
| १६ | १८ | जातकर्म | १७ |
| × | १९ | यमलजनने प्रायश्चित्तम् | १९ |
| × | २० | मारुत-यमलचरु-विधानम् | २१ |
| × | २१ | मूलविधिः | २२ |
| १७ | २२ | नामकरणम् | २४ |


१. सूचीपत्रे प्रथमा कण्डिका संख्या पारस्कर-गृह्यसूत्रस्य, द्वितीया कात्यायनगृह्यसूत्रस्य विज्ञेया । उभयोर्गृह्यसूत्रयोस्तुलनार्थमुभयोः कण्डिकासंख्या अत्र निर्दिश्यते ।

| पा० कं० | का० कं० | विषयः | पृष्ठ |
|---|---|---|---|
| १८ | २३ | प्रवासादागतस्य गृहोपस्थान-पुत्रशिरोऽवघ्राणादिकर्म | २५ |
| १९ | २४ | अन्नप्राशनम् | २५ |

## द्वितीय-काण्डम्

| | | | |
|---|---|---|---|
| १ | १ | चूडाकर्म | २७ |
| × | २ | कर्णवेधः | २८ |
| २ | ३ | उपनयनम् (वासः परिधापनादिकर्म) | २९ |
| ३ | ४ | " (आचार्यानुशासनादिकर्म) | ३० |
| ४ | ५ | " (समिधानादिकर्म) | ३१ |
| ५ | ६ | " (भिक्षाचर्यादिविधानम्) | ३२ |
| × | ७ | वेदव्रतानि | ३४ |
| ६ | ८ | समावर्त्तनम् | ३५ |
| ७ | ९ | स्नातकस्य यमाः | ३७ |
| ८ | १० | स्नातकस्य त्रिरात्रं व्रतम् | ३८ |
| ९ | ११ | पञ्चमहायज्ञाः | ३८ |
| × | १२ | धर्मजिज्ञासा | ३९ |
| १० | १३ | अध्यायोपाकर्म | ४० |
| ११ | १४ | अनध्याय-निरूपणम् | ४१ |
| १२ | १५ | अध्यायोत्सर्गकर्म | ४२ |
| १३ | १६ | लाङ्गलयोजनकर्म | ४२ |
| १४ | १७ | श्रवणाकर्म | ४३ |
| १५ | १८ | इन्द्रयज्ञः | ४४ |
| १६ | १९ | पृषातककर्म | ४५ |
| १७ | २० | सीता-यज्ञः | ४५ |

## तृतीय-काण्डम्

| | | | |
|---|---|---|---|
| १ | १ | अनाहिताग्नेर्नवन्नप्रशासनम् | ४८ |
| २ | २ | आग्रहायणी-कर्म | ४९ |
| ३ | ३ | ऊर्ध्वमाग्रहायण्यास्तिस्रोऽष्टकाः | ५० |
| ४ | ४ | शालाकर्म | ५२ |

| पा० कं० | का कं० | विषय | पृष्ठ |
|---|---|---|---|
| × | ५ | वापीकूपतडागारामादीनां प्रतिष्ठापनम् | ५४ |
| ५ | ६ | मणिकावधानम् | ५६ |
| ६ | ७ | शीर्षरोग-भेषजम् | ५६ |
| ७ | ८ | उतूल-परिमेहः | ५७ |
| ८ | ९ | शूलगवः | ५७ |
| ९ | १० | वृषोत्सर्गः | ५८ |
| १० | ११ | उदककर्म | ५९ |
| ११ | १२ | स्मार्तपशुकर्म | ६१ |
| १२ | १३ | अवकीर्णि-प्रायाश्चित्तम् | ६२ |
| १३ | १४ | सभा-प्रवेशनम् | ६२ |
| १४ | १५ | रथारोहणम् | ६३ |
| १५ | १६ | हस्त्यारोहणम् | ६४ |

अथ परिशिष्टानि

| | | |
|---|---|---|
| १ | शौच-सूत्रम् | ६७ |
| २ | स्नान-सूत्रम् | ७० |
| ३ | श्राद्ध-सूत्रम् | ७३ |
| ४ | भोजन-सूत्रम् | ७८ |

# अवशिष्टाष्टिप्पण्यः

पृष्ठ २०, पं० १३—१५ मुद्रित-पाठः—

'०शरीरसर्पणऽइत्येवं छत्रध्वजविनाशे सार्पे नैर्ऋते गण्डयोगेष्वन्येष्वप्युत्पातेषु भूकम्पोल्कापातकासर्पसंगमप्रेक्षणादिष्वेतदेव प्रायश्चित्तं···' इत्यस्य स्थाने ।

'ख' कोशे—'०शरीरसर्पणऽइत्येवं सार्पे नैर्ऋते गण्डयोगेष्वन्येषूत्पातेषु भूमिकम्पोल्कापाते छत्रध्वजविनाशे काकमैथुनदर्शने पर्जन्यकाकसर्प आरण्यपशुगे[उ]त्पाते दैवप्रसर्पे कूपोद्गर्जने पर्वतपतने सूर्यसंगप्रेक्षणे[1] काकस्पर्शनेष्वन्येष्वप्युत्पातेष्वेतदेव प्रायश्चित्तं···, इति पाठः ।

'ग' कोशे—'०शरीरसर्पणऽइत्येवं भूकम्पोल्कापाते छत्रध्वजविनाशे सार्पे नैर्ऋते गण्डयोगे देवप्रसर्पे कूपोद्गर्जने पर्वतपतने सर्पसंगप्रेक्षणे काकस्पर्शनेष्वेतदेव प्रायाश्चित्तं··' इति पाठः ।

पृष्ठ २१, पं० १७— '२. इयं कण्डिका नास्ति ङ. कोशे' इत्यस्य स्थाने '२. इयं कण्डिका नास्ति ख. ङ. कोशयोः ।' इत्येवं शोधनीयम् ।

पृष्ठ २३, पं० ११—१३—'पञ्चदशाज्याहुती···मा नस्तोक इति' इत्यस्य स्थाने ।

'ख' कोशे—'कृणुष्वपाज इति पञ्चदशाज्याहुतीश्चतुर्गृहीतं जुहुयान्मा नस्तोक इति द्वाभ्यां' इति पाठः ।

पृष्ठ २६, टि २ अन्ते—'प्रतिभाति' इत्यतोऽग्रे परिवर्धनीयम्—'द्वितीयकाण्डान्तेऽपि सर्वं सूत्रं द्विः पठ्यते ।'

---

१. 'सर्पसंगप्रेक्षणे' इति शुद्धः पाठः स्यात् । द्र०—ग. कोशस्य पाठः ।

## ँकार-ँकारयोर्विशेषः

पारस्करगृह्यसूत्रस्य कात्यायनगृह्यसूत्रस्य च मुद्रितेषु लिखितेषु च ग्रन्थेषु ँ ँ चिह्नयोर्न संहितावद् व्यवस्थितरूपेण दर्शनं भवति। क्वचिदुभयोः साङ्कर्यं, क्वचिद् वैपरीत्यं, क्वचिच्चैकस्यैव निर्देश उपलभ्यते। अस्माभिस्तु संहितापाठवद् इहानयोश्चिह्नयोर्यथाशास्त्रं व्यवस्थितरूपेण निर्देशस्य प्रयत्नोऽकारि। ह्रस्वात् परः 'ँ' दीर्घ उच्यते, दीर्घाच्च परः 'ँ' ह्रस्वः स्मर्यते। एवं गुरावक्षरे परतः पुरा गुरुरूपस्यासीत् चिह्नं किञ्चित्, तच्चेदानीं नष्टम् (द्र०—प्रतिज्ञापरिशिष्टेऽनन्तभट्टीया व्याख्या)। सम्प्रति गुरावक्षरे परतोऽपि 'ँ' चिह्नमेव निर्दिश्यते।

एतस्मिन् विषये विशेषविचारोऽस्माभिः स्वसम्पादिते माध्यन्दिनसंहितापदपाठस्य तृतीये परिशिष्टे (पृष्ठ ६४१-६४४) कृतः, स द्रष्टव्यः।

# अथ कात्यायन-गृह्यसूत्रम्

## प्रथमं काण्डम्

### प्रथमा कण्डिका

अथातो गृह्यस्थालीपाकानां कर्म ॥१॥ परिसमुह्योपलिप्योल्लिख्योद्धृत्याभ्युक्ष्याग्निमुपसमाधाय दक्षिणतो ब्रह्मासनमास्तीर्य प्रणीय परिस्तीर्यार्थवदासाद्य पवित्रे कृत्वा प्रोक्षणीः संस्कृत्यार्थवत् प्रोक्ष्य निरूप्याज्यमधिश्रित्य पर्यग्नि कुर्यात् ॥२॥ स्रुवं प्रतप्य सम्मृज्याभ्युक्ष्य पुनः प्रतप्य निदध्यात् ॥३॥ आज्यमुद्वास्योत्पूयावेक्ष्य प्रोक्षणीश्च पूर्ववदुपयमनान्कुशानादाय समिधोऽभ्याधाय पर्युक्ष्य जुहुयात् ॥४॥ एष एव विधिर्यत्र क्वचिद्धोमः ॥५॥ ॥१॥

—:०:—

### द्वितीया कण्डिका

आवसथ्याधानं दारकाले ॥१॥ दायाद्यकाल एकेषाम् ॥२॥ वैश्यस्य बहुपशोर्गृहादग्निमाहृत्य ॥३॥ चातुष्प्राश्यपचनवत्सर्वम् ॥४॥ अरणिप्रदानमेके ॥५॥ पञ्चमहायज्ञा इति श्रुतेः ॥६॥ अग्न्याधेयदेवताभ्यः स्थालीपाकं श्रपयित्वाऽऽज्यभागाविष्ट्वाऽऽज्याहुतीर्जुहोति ॥७॥ त्वन्नोऽअग्ने सत्वन्नोऽअग्न इमम्मेवरुण तत्त्वायामि येतेशतमयाश्चाग्न उदुत्तमम्भवतन्न इत्यष्टौ

पुरस्तात् ॥८॥ एवमुपरिष्टात्स्थालीपाकस्याग्न्याधेयदेवताभ्या हुत्वा जुहोति ॥९॥ स्विष्टकृते च ॥१०॥ अयास्यग्नेर्वषट्कृतं यत्कर्मणात्यरीरिचं देवा गातुविदं इति ॥११॥ बर्हिर्हुत्वा प्राश्नाति ॥१२॥ ततो ब्राह्मणभोजनम् ॥१३॥ ॥२॥

—:०:—

# तृतीया कण्डिका

षडर्घ्या भवन्त्याचार्य ऋत्विग्वैवाह्यो राजा प्रियः स्नातक इति॥१॥ प्रतिसंवत्सरानर्हयेयुः॥२॥ यक्ष्यमाणास्त्वृत्विजः॥३॥ आसनमाहार्याह साधु भवानास्तामर्चयिष्यामो भवन्तमिति॥४॥ आहरन्ति विष्टरं पद्यं[1] पादार्थमुदकमर्घमाचमनीयं मधुपर्कं दधिमधुघृतमपिहितं कांस्ये कांस्येन ॥५॥ अन्यस्त्रिस्त्रिः प्राह विष्टरादीनि ॥६॥ विष्टरं प्रतिगृह्णाति ॥७॥ वर्ष्मोऽस्मि समानानामुद्यतामिव सूर्यः। इमन्तमभितिष्ठामि यो मा कश्चाभिदासतीत्येनमभ्युपविशति ॥८॥ पादयोरन्यं विष्टर आसीनाय ॥९॥ सव्यं पादं प्रक्षाल्य दक्षिणं प्रक्षालयति ॥१०॥ ब्राह्मणश्चेद् दक्षिणं प्रथमम्॥११॥ विराजो दोहोऽसि विराजो दोहमशीय मयि पाद्यायै विराजो दोह इति ॥१२। अर्घम्प्रतिगृह्णात्यापःस्थ[2] युष्माभिः सर्वान्कामानवाप्नवानीति ॥१३॥ निनयन्नभिमन्त्रयते—समुद्रं वः प्रहिणोमि स्वां योनिमभिगच्छत। अरिष्टा अस्माकं वीरा मा परासेचि मत्पय इति ॥१४॥ आचामत्यामागन्यशसा सꣳसृज वर्चसा। तं मा कुरु

१. 'पाद्यम्' इति घ. कोशे पाठः।
२. '० त्याप स्थ' इति क. कोशे पाठः।

प्रियं प्रजानामधिपतिं पशूनामरिष्टिं[1] तनूनामिति ॥१५॥ मित्रस्य त्वेति मधुपर्कं प्रतीक्षते ॥१६॥ देवस्य त्वेति प्रतिगृह्णाति ॥१७॥ सव्ये पाणौ कृत्वा दक्षिणस्यानामिकया त्रिः प्रयाति—नमः श्यावास्यायान्नशने यत्त आविद्धं तत्ते निष्कृन्तामीति ॥१८॥ अनामिकाङ्गुष्ठेन च त्रिर्निरुक्षयति ॥१९॥ तस्य त्रिः प्राश्नाति—यन्मधु मधव्यं परमꣳरूपमन्नाद्यम् । तेनाहं मधुनो मधव्येन परमेण रूपेणान्नाद्येन परमो मधव्योऽन्नादोऽसानीति ॥२०॥ मधुमतीभिर्वा प्रत्यचम् ॥२१॥ पुत्रायान्तेवासिने वोत्तरत आसीनायोच्छिष्टं दद्यात् ॥२२॥ सर्वं वा प्राश्नीयात् ॥२३॥ प्राग्वा सञ्चरे निनयेत् ॥२४॥ आचम्य प्राणान्त्सम्मृशति—वाङ्म आस्ये नसोः प्राणोऽक्ष्णोश्चक्षुः कर्णयोः श्रोत्रं बाह्वोर्बलमूर्वोरोजोऽरिष्टानि मेऽङ्गानि तनूस्तन्वा मे सहेति ॥२५॥ आचान्तोदकाय शासमादाय गौरिति त्रिः प्राह ॥२६॥ प्रत्याह—माता रुद्राणां दुहिता वसूनाꣳस्वसादित्यानाममृतस्य नाभिः । प्र नु वोचं चिकितुषे जनाय मा गामनागामदितिं वधिष्ट । मम चामुष्य च पाप्मानꣳ हनोमीति यद्यालभेत ॥२७॥ अथ यद्युत्सिसृक्षेन्मम चामुष्य च पाप्मा हत ओमुत्सृजत तृणान्यत्त्विति ब्रूयात् ॥२८॥ न त्वेवामाꣳसोऽर्घः स्यात् ॥२९॥ अधियज्ञमधिविवाहं कुरुतेत्येव ब्रूयात् ॥३०॥ यद्यप्यसकृत्संवत्सरस्य सोमेन यजेत कृतार्घ्या एवैनं याजयेयुर्नाकृतार्घ्या इति श्रुतेः ॥३१॥ ॥३॥

—:०:—

१. '०मरिष्टं' इति ङ. कोशे पाठः ।

# चतुर्थी कण्डिका

चत्वारः पाकयज्ञा हुतोऽहुतः प्रहुतः प्राशित इति ॥१॥ पञ्चसु बहिःशालायां विवाहे चूडाकरण उपनयने केशान्ते सीमन्तोन्नयन इति ॥२॥ उपलिप्त उद्धतावोक्षितेऽग्निमुपसमाधाय ॥३॥ निर्मन्थ्यमेके विवाहे ॥४॥ उदगयन आपूर्यमाणपक्षे पुण्याहे कुमार्याः पाणिं गृह्णीयात् ॥५॥ त्रिषु त्रिषूत्तरादिषु॥६॥ स्वातौ मृगशिरसि रोहिण्यां वा ॥७॥ तिस्रो ब्राह्मणस्य वर्णानुपूर्व्येण ॥८॥ द्वे राजन्यस्य॥९॥ एका वैश्यस्य॥१०॥ सर्वेषाᳬं शूद्रामप्येके मन्त्रवर्जम् ॥११॥ अथैनां वासः परिधापयति—जरां गच्छ परिधत्स्व वासो भवाकृष्टीनामभिशस्तिपा वा। शतं च जीव शरदः सुवर्चा रयिं च पुत्राननुसंव्ययस्वायुष्मतीदं परिधत्स्व वास इति ॥१२॥ अथोत्तरीयम्—या अकृन्तन्नवयं या अतन्वत। याश्च देवीस्तन्तूनभितो ततन्थ। तास्त्वा देवीर्जरसे संव्ययस्वायुष्मतीदं परिधत्स्व वास इति ॥१३॥ अथैनौ समञ्जयति—समञ्जन्तु विश्वेदेवाः समापो हृदयानि नौ। सम्मातरिश्वा सन्धाता समुदेष्ट्री दधातु नाविति ॥१४॥ पित्रा प्रत्तामादाय गृहीत्वा निष्क्रामति—यदैषि मनसा दूरं दिशोऽनु पवमानो वा। हिरण्यपर्णो वैकर्णः स त्वा मन्मनसां करोत्वित्यसाविति[1] ॥१५॥ अथैनौ समीक्षयति—अघोरचक्षुरपतिघ्न्येधि शिवा पशुभ्यः सुमनाः सुवर्चाः। वीरसूर्देवकामा स्योना शं नो भव द्विपदे शं चतुष्पदे। सोमः प्रथमो विविदे गन्धर्वो विविद उत्तरः। तृतीयोऽग्निष्टे पतिस्तुरीयस्ते मनुष्यजाः। सोमोऽददद् गन्धर्वाय गन्धर्वोऽददद‍ग्नये। रयिं च

---

१. '० त्यसाविति नामगृह्णाति' इति ग. कोशे पाठः।

पुत्रांश्चादादग्निर्मह्यमथो इमाम् । सा नः पूषा शिवतमामैरय सा न ऊरू उशती विहर । यस्यामुशन्तः प्रहराम शेपं यस्यामु कामा बहवो निविष्ट्या इति ॥१६॥ ॥४॥

—:०:—

# पञ्चमी कण्डिका

प्रदक्षिणमग्निं पर्याणीयैके ॥१॥ पश्चादग्नेस्तेजनीं कटं वा दक्षिणपादेन प्रवृत्योपविशति ॥२॥ अन्वारब्ध आघारावाज्य-भागौ महाव्याहृतयः सर्वप्रायश्चित्तं प्राजापत्यꣳस्विष्टकृच्च ॥३॥ एतन्नित्यꣳ सर्वत्र ॥४॥ प्राङ्महाव्याहृतिभ्यः स्विष्टकृद-न्यच्चेदाज्याद्धविः ॥५॥ सर्वप्रायश्चित्तं[1] प्राजापत्यान्तरमेत-दावापस्थानं विवाहे ॥६॥ राष्ट्रभृत इच्छञ्जयाभ्यातानांश्च जानन् ॥७॥ येन कर्मणेर्च्छेदिति[2] वचनात् ॥८॥ चित्तं च चित्तिश्चाकूतं चाकूतिश्च विज्ञातं च विज्ञातिश्च मनश्च शक्वरीश्च दर्शश्च पौर्णमासं च बृहच्च रथन्तरं च । प्रजापतिर्जयानिन्द्राय वृष्णे प्रायच्छदुग्रः पृतना जयेषु । तस्मै विशः समनमन्त सर्वाः स उग्रः स इहव्यो बभूव स्वाहेति ॥९॥ अग्निर्भूतानामधिपतिः स मावत्विन्द्रो ज्येष्ठानां यमः पृथिव्या वायुरन्तरिक्षस्य सूर्यो दिवश्चन्द्रमा नक्षत्राणां बृहस्पतिर्ब्रह्मणो मित्रः सत्यानां वरुणो-ऽपाꣳसमुद्रः स्रोत्यानामन्नꣳ साम्राज्यानामधिपति तन्मावतु सोम ओषधीनाꣳसविता प्रसवानाꣳरुद्रः पशूनां त्वष्टा रूपाणां विष्णुः पर्वतानां मरुतो गणानामधिपतयस्ते मावन्तु पितरः

१. 'सर्वप्रायश्चित्तप्राजापत्या०' इति छ. कोशे पाठः ।

२. 'कर्मणोत्सेद' इति 'कर्मणोच्छेद' इति च पाठान्तरे इति छ. कोशे टिप्पण्यां पाठः ।

पितामहाः परेवरे ततास्ततामहा । इह मावन्त्वास्मिन्ब्रह्मण्यस्मिन् क्षत्रेऽस्यामाशिष्यस्यां पुरोधायामस्मिन्कर्मण्यस्यां देवहूत्या ᳪ स्वाहेति सर्वत्रानुषजति ॥१०॥ अग्निरैतु प्रथमो देवतानां ᳪ सोऽस्यै प्रजां मुञ्चतु मृत्युपाशात् । तदयᳪ राजा वरुणोऽनुमन्यतां यथेयᳪ स्त्री पौत्रमघं न रोदात्स्वाहा । इमामग्निस्त्रायतां गार्हपत्य प्रजामस्यै नयतु दीर्घमायुः । अशून्योपस्था जीवतामस्तु माता पौत्रमानन्दमभिविबुध्यतामियᳪ स्वाहा । स्वस्ति नो अग्ने दिव आपृथिव्या विश्वानि धेह्ययथा यजत्र । यदस्यां महि दिवि जातं प्रशस्तं तदस्मासु द्रविणं धेहि चित्रᳪ स्वाहा । सुगन्नु[1] पन्थां प्रदिशन्न एहि ज्योतिष्मध्ये ह्यजरन्न आयुः । अपैतु मृत्युरमृतं न[2] आगाद्वैवस्वतो नोऽअभयं कृणोतु स्वाहेति ॥११॥ परं मृत्यविति चैके प्राशनान्ते ॥१२॥ ॥५॥

—:०:—

# षष्ठी कण्डिका

कुमार्या भ्राता शमीपलाशमिश्राँल्लाजानञ्जलिनाञ्जलावावपति ॥१॥ ताञ्जुहोति सᳪ हतेन तिष्ठती—अर्यमणं देवं कन्या अग्निमयक्षत । स नो अर्यमा देवः प्रेतो मुञ्चतु मा पतेः स्वाहा । इयं नार्युपब्रूते लाजानावपन्तिका । आयुष्मानस्तु मे पतिरेधन्तां ज्ञातयो मम स्वाहा । इमाँल्लाजानावपाम्यग्नौ समृद्धिकरणं तव । मम तुभ्य च संवननं तदग्निरनुमन्यतामियᳪ स्वाहेति ॥२॥ अथास्यै दक्षिणᳪ हस्तं गृह्णाति साङ्गुष्ठं—

१. 'सुगन्न' इति छ. कोशे टि० पाठः ।
२. 'म' इति ग. कोशे, छ. कोशे च टिप्पण्यां पाठः ।

गृभ्णामि ते सौभगत्वाय हस्तं मया पत्या[1] जरदष्टिर्यथासः। भगोऽर्यमा सविता पुरन्धिर्मह्यं त्वाऽदुर्गार्हपत्याय देवाः। अमोऽहमस्मि सा त्वꣳसा त्वमस्यमोऽअहम्। सामाहमस्मि ऋक्त्वं द्यौरहं पृथिवी त्वं तावेहि विवहावहै सह रेतो दधावहै प्रजां प्रजनयावहै पुत्रान् विन्दावहै बहून् ते सन्तु जरदष्टयः सम्प्रियौ रोचिष्णू सुमनस्यमानौ पश्येम शरदः शतं जीवेम शरदः शतꣳ शृणुयाम शरदः शतमिति ॥३॥ ॥६॥

—:o:—

# सप्तमो कण्डिका

अथैनामश्मानमारोहयत्युत्तरतोऽग्नेर्दक्षिणपादेन—आरोहेममश्मानमश्मेव त्वꣳ स्थिरा भव। अभितिष्ठ पृतन्यतोऽवबाधस्व पृतनायत इति ॥१॥ अथ गाथां गायति—सरस्वति प्रेदमव सुभगे वाजिनीवती। यां त्वा विश्वस्य भूतस्य प्रजायामस्याग्रतः यस्यां भूतꣳ समभवद् यस्यां विश्वमिदं जगत्। तामद्य गाथां गास्यामि या स्त्रीणामुत्तमं यश इति ॥२॥ अथ परिक्रामतः—तुभ्यमग्ने पर्यवहन्त्सूर्यां वहतु ना सह। पुनः पतिभ्यो जायां दाग्ने प्रजया सहेति ॥३॥ एवं द्विरपरं लाजादि ॥४॥ चतुर्थꣳ शूर्पकुष्ठया सर्वाँल्लाजानावपति—भगाय स्वाहेति॥५॥ त्रिः परिणीतां प्राजापत्यꣳ हुत्वा ॥६॥ ॥७॥

—:o:—

१. 'पत्या सह जरदष्टि०' इति ग. कोशे पाठः।

# अष्टमी कण्डिका

अथैनामुदीचीꣳसप्त पदानि प्रक्रामयति एकमिषे द्वे ऊर्जे त्रीणि रायस्पोषाय चत्वारि मयोभवाय पञ्च पशुभ्यः षड्-ऋतुभ्यः सखे सप्तपदा भव सा मामनुव्रता भव ॥१॥ विष्णु-स्त्वा नयत्विति सर्वत्रानुषजति ॥२॥ निष्क्रमणप्रभृत्युदकुम्भꣳ स्कन्धे कृत्वा दक्षिणतोऽग्नेर्वाग्यतः स्थितो भवति ॥३॥ उत्तरत एकेषाम् ॥४॥ तत एनां मूर्द्धन्यभिषिञ्चति—आपः शिवाः शिवतमाः शान्ताः शान्ततमास्तास्ते कृण्वन्तु भेषजमिति ॥५॥ आपोहिष्ठेति च तिसृभिः ॥६॥ अथैनाꣳसूर्यमुदीक्षयति तच्चक्षुरिति ॥७॥ अथास्यै दक्षिणाꣳसमधिहृदयमालभते—मम व्रते ते हृदयं दधामि मम चित्तमनुचित्तं ते अस्तु । मम वाचमेकमना जुषस्व प्रजापतिष्ट्वा नियुनक्तु मह्यमिति ॥८॥ अथैनामभिमन्त्रयते—सुमङ्गलीरियं वधूरिमाꣳसमेत पश्यत । सौभाग्यमस्यै दत्त्वायाथास्तं विपरेतनेति ॥९॥ तां दृढः पुरुष उन्मथ्य प्राग्वोदग्वाऽनुगुप्त आगार आनडुहे रोहिते चर्मण्युप-वेशयति—इह गावो निषीदन्त्विहाश्वा इह पूरुषाः । इहो सहस्र-दक्षिणो यज्ञ इह पूषा निषीदत्विति[1] ॥१०। ग्रामवचनं च कुर्युः ॥११॥ विवाहश्मशानयोर्ग्रामं प्रविशतादिति वचनात् ॥१२॥ तस्मात् तयोर्ग्रामः प्रमाणमिति श्रुतेः ॥१३॥ आचार्याय वरं ददाति ॥१४॥ गौर्ब्राह्मणस्य वरः ॥१५॥ ग्रामो राजन्य-स्य ॥१६॥ अश्वो वैश्यस्य ॥१७॥ अधिरथꣳशतं दुहितृमते ॥१८॥ अस्तमिते ध्रुवं दर्शयति—ध्रुवमसि ध्रुवं त्वा पश्यामि ध्रुवैधि पोष्ये मयि । मह्यं त्वादाद् बृहस्पतिर्मया पत्या प्रजावती

---

१. अयं ग. कोशे । अन्यत्र 'निषीदन्त्विति' इत्यपपाठः ।

संजीव शरदः शतमिति ॥१९॥ सा यदि न पश्येत्पश्यामीत्येव ब्रूयात्॥२०॥त्रिरात्रमक्षारालवणाशिनौ स्यातामधः शयीयाताᳬं संवत्सरं न मिथुनमुपेयातां द्वादशरात्रᳬं षड्रात्रं त्रिरात्र-मन्ततः ॥२१॥ ॥८॥

—:०:—

# नवमी कण्डिका

उपयमनप्रभृत्यौपासनस्य परिचरणम् ॥१॥ अस्तमिता-नुदितयोर्दध्ना तण्डुलैरक्षतैर्वा ॥२॥ अग्नये स्वाहा प्रजापतये स्वाहेति सायम् ॥३॥ सूर्याय स्वाहा प्रजापतये स्वाहेति प्रातः ॥४॥ पुमाᳬंसौ मित्रावरुणौ पुमाᳬंसावश्विनावुभौ । पुमानि-न्द्रश्च सूर्यश्च पुमाᳬंसवर्ततां मयि पुनः स्वाहेति पूर्वां गर्भ-कामा ॥५। ॥९॥

—:०:—

# दशमी कण्डिका

राज्ञोऽक्षभेदे नद्धविमोक्षे यानविपार्यासेऽन्यस्यां वा व्यापत्तौ स्त्रियाश्चोद्वहने तत्रैवाग्निमुपसमाधायाज्यᳬं संस्कृत्येह रतिरिति जुहोति नानामन्त्राभ्याम् ॥१॥ अन्यद्यानमुपकल्प्य तत्रोपवेशयेद् राजानᳬं स्त्रियं वा प्रतिक्षत्र इति यज्ञान्तेनात्वा-र्षहामिति चैतया ॥२॥ धुर्यौ दक्षिणा ॥३॥ प्रायश्चित्तिः[1] ।४॥ ततो ब्राह्मणभोजनम् ।५। ॥१०॥

—:०:—

१. प्रायश्चित्तिरिति चास्य कर्मणः संज्ञेति गदाधरः ।

# एकादशी कण्डिका

चतुर्थ्यामपररात्रेऽभ्यन्तरतोऽग्निमुपसमाधाय दक्षिणतो ब्रह्माणमुपवेश्योत्तरत उदपात्रं प्रतिष्ठाप्य स्थालीपाकꣳश्रपयित्वाऽऽज्यभागाविष्ट्वाऽऽज्याहुतीर्जुहोति ॥१॥ अग्ने प्रायश्चित्ते त्वं देवानां प्रायश्चित्तिरसि ब्राह्मणस्त्वा नाथकाम उपधावामि याऽस्यै पतिघ्नी तनूस्तामस्यै नाशय स्वाहा। वायो प्रायश्चित्ते त्वं देवानां प्रायश्चित्तिरसि ब्राह्मणस्त्वा नाथकाम उपधावामि याऽस्यै प्रजाघ्नी तनूस्तामस्यै नाशय स्वाहा। सूर्य प्रायश्चित्ते त्वं देवानां प्रायश्चित्तिरसि ब्राह्मणस्त्वा नाथकाम उपधावामि याऽस्यै पशुघ्नी तनूस्तामस्यै नाशय स्वाहा। चन्द्र प्रायश्चित्ते त्वं देवानां प्रायश्चित्तिरसि ब्राह्मणस्त्वा नाथकाम उपधावामि याऽस्यै गृहघ्नी तनूस्तामस्यै नाशय स्वाहा। गन्धर्व प्रायश्चित्ते त्व देवानां प्रायश्चित्तिरसि ब्राह्मणस्त्वा नाथकाम उपधावामि याऽस्यै यशोघ्नी तनूस्तामस्यै नाशय स्वाहेति ॥२॥ स्थालीपाकस्य जुहोति—प्रजापतये[1] स्वाहेति ॥३॥ हुत्वा हुत्वैतासामाहुतीनामुदपात्रे सꣳस्रवान्त्समवनीय तत एनां मूर्द्धन्यभिषिञ्चति। या ते पतिघ्नी प्रजाघ्नी पशुघ्नी गृहघ्नी यशोघ्नी निन्दिता तनूर्जारघ्नीं तत एनां करोमि सा जीर्य त्वं मया[2] सहासाविति॥४॥ अथैनाꣳस्थालीपाकं प्राशयति प्राणैस्ते प्राणान्त्संदधाम्यस्थिभिरस्थीनि माꣳसैर्माꣳसानि त्वचा त्वचमिति ॥५॥ तस्मादेवंविच्छ्रोत्रियस्य दारेण नोपहासमिच्छेदुत ह्येवंवित्परो भवति ॥६॥ तामुदुह्य यथर्तु प्रवेशनम् ॥७॥

---

१. 'स्वाहा अग्नये स्विष्टकृते' इति ङ. कोशे ।

२. 'मया पत्या सहा०' इति ग. कोशे पाठः ।

यथाकामी वा काममाविजनितोः सम्भवामेति वचनात् ॥८॥ अथास्यै दक्षिणाꣳसमधिहृदयमालते—यत्ते सुसीमे हृदयं दिवि चन्द्रमसि श्रितम्। वेदाहं तन्मां तद्विद्यात् पश्येम शरतः शतं जीवेम शरदः शतꣳ श्रृणुयाम शरदः शतमिति ॥९॥ एवमत ऊर्ध्वम् ॥१०॥ ॥११॥

—:०:—

## द्वादशी कण्डिका

पक्षादिषु स्थालीपाकꣳश्रपयित्वा दर्शपूर्णमासदेवताभ्यो हुत्वा जुहोति—ब्रह्मणे प्रजापतये विश्वेभ्यो देवेभ्यो द्यावापृथिवीभ्यामिति ॥१॥ विश्वेभ्यो देवेभ्यो बलिहरणं भूतगृहेभ्यो आकाशाय च ॥२॥ वैश्वदेवस्याग्नौ जुहोति—अग्नये स्वाहा प्रजापतये स्वाहा विश्वेभ्यो देवेभ्यः स्वाहाऽग्नये स्विष्टकृते स्वाहेति॥३॥ प्राशनान्ते[1] बाह्यतः स्त्रीबलिꣳ हरति नमः स्त्रियै नमः पुꣳसे वयसेऽवयसे नमः शुक्लाय कृष्णदन्ताय पापीनां[2] पतये नमः। ये मे प्रजामुपलोभयन्ति ग्रामे वसन्त उत वाऽरण्ये तेभ्यो नमोऽस्तु बलिमेभ्यो हरामि स्वस्ति मेऽस्तु प्रजां मे ददात्विति ॥४॥ शेषमद्भिः प्लाव्य ततो ब्राह्मणभोजनम् ॥५॥ ॥१२॥[3]

—:०:—

१. 'प्राशनान्ते' इति नास्ति ग. कोशे ।

२. 'दीर्घश्छान्दसः इति जयराम, 'पापानां' इति ङ. कोशे ।

३. अत्रान्ते घ. कोशे क्षेपक' इत्येव लिखितं वर्तते । सर्वकोशेष्वस्याः कण्डिकाया दर्शनात् नेयं 'क्षेपकरूपा' । यद्वा स निर्देश उत्तरकण्डिकाविषयकः स्यात्, तस्या छ. कोशेऽदर्शनात् ।

# त्रयोदशो कण्डिका

[1]अथर्तुमतीं जायामधिगच्छेत् ॥१॥ पिण्डपितृयज्ञेन यजेत ॥२॥ मध्यं पिण्डं पत्नी प्राश्नाति पुत्रकामा ॥३॥ तत एतामाहुतिं जुहोति ॥४॥ आधत्त पितर इत्यलंकारमवजिघ्रति ॥५॥ आयन्तु न इति जपति ॥६॥ एवमथर्तुमतीं [2]जाया-हृदयमालभ्य पूर्ववत् ॥७॥ सव्येन पाणिना उपस्थमभिमृशति— भग प्रणेतरिति प्रागुतेदानीमिति ॥८॥ रेतो मूत्रमिति सन्धत्ते ॥९॥ गायत्रेणेति प्रतिमन्त्रं मन्थति ॥१०॥ पुत्रकामोऽभिगच्छेन्नित्यम् ॥१०॥ ॥१३॥

—:०:—

# चतुर्दशी कण्डिका

अथ गर्भाधानम् ॥१॥ पुष्पवत्याश्चतुरहादूर्ध्वं स्नात्वा विरजायास्तस्मिन्नेव दिवा आदित्यं गर्भमित्यादित्यमवेक्षेत[3] ॥२॥ गृहे वा स्नापयित्वा तामभिगच्छेदिति श्रुतेः[4] ॥३॥ तस्मिन् प्रजायाः सम्भवकाले निशायां कुर्यात् ॥४॥ यदि दिवा मैथुनं व्रजेत् क्लीवा अल्पवीर्या अल्पायुषाश्च प्रसूयन्ते[5] तस्माद्

१. इयं कण्डिका घ. कोशेऽग्निमायाश्चतुर्दश्याः स्थाने पठ्यते, चतुर्दशी चेह। तत्रान्ते 'क्षेपक' इति पठ्यते। एतत् कोशभिन्नेषु सर्वेषु कात्यायनगृह्यकोशेष्वियं कण्डिका उपलभ्यते। च. कोशे तु इमे कण्डिके ( ) इत्येवं कोष्ठके पठ्येते।

२. 'जपित्वा हृदयमालभ्य' इति छ. कोशे।

३. '०वेक्षत इति' च. कोशे टिप्पण्यां पाठान्तरम्।

४. 'गृहे वा स्नात्वापः कल्पयतीति श्रुतेः' इति घ. कोशे।

५. 'प्रजाः' इति शेषः। 'प्रजायन्ते' इति घ. कोशे।

वर्जयेत् प्रजाकामो हि[1] श्रुतिस्मृतिविरोधाभ्याम् ॥५॥ दक्षिणेन पाणिना ऊरू प्रसार्य[2] प्रजास्थानमभिमृशति[3]—पूषा भगꣳ सविता मे ददातु रुद्रः कल्पयति ललामगुम्। विष्णुर्योनिं कल्पयतु त्वष्टा रूपाणि पिꣳशतु। आसिञ्चतु प्रजापतिर्धाता गर्भं दधातु ते ॥ गर्भं धेहि सिनीवालि गर्भं धेहि पृथुष्टुके। गर्भं ते अश्विनौ देवावाधत्तां पुष्करस्रजविति ॥६॥ सꣳसृजेथास्तेजो[4] वैश्वानरो दद्यात् ॥७॥ ब्रह्माणमामन्त्रयते—ब्रह्मा गर्भं दधात्विति।८॥ प्राङ्मुख उदङ्मुखो वोपविष्टो मन्थयते[5]—रेतो मूत्रमिति चैके स्रावꣳ कुर्यात् ॥९॥ ॥१४॥[6]

—:०:—

## पञ्चदशी कण्डिका

सा यदि गर्भं न दधीत सिꣳह्याः श्वेतपुष्प्या[7] उपोष्य पुष्येण मूलमुत्थाप्य चतुर्थेऽहनि स्नातायां निशायामुदपेषं पिष्ट्वा दक्षिणस्यां नासिकायामासिञ्चति[8]—इयमोषधी त्रायमाणा सहमाना सरस्वती। अस्या अहं बृहत्याः पुत्रः पितुरिव नाम जग्रभमिति ॥१॥ ॥१५॥

—:०:—

१. 'गृही' इति क. कोशे, च. कोशस्य टिप्पण्यां च पाठान्तरम्।

२. 'ऊरू विहापयति' इति घ. कोशे।

३. 'मृश्यन्यन नमा ते' इति घ. कोशे।

४. 'सꣳसृजेतां तेजो' इति घ. कोशे।

५. 'मन्थेद्रेतो०' इति क. कोशे।

६. घ. कोशे इयं कण्डिका त्रयोदश्याः स्थाने पठ्यते। तत्र 'क्षेपक' इति च निर्दिश्यते।

७. 'श्वेतपुष्पा' इति क. ङ. कोशयोरपपाठः।

८. 'पिष्ट्वास्या नासिकाया दक्षिणमासिञ्चति' इति क. कोशे।

# षोडशी कण्डिका

अथ पुंसवनम् ॥१॥ पुरा स्पन्दत[1] इति मासे द्वितीये तृतीये वा ॥२॥ यदहः पुंसा नक्षत्रेण चन्द्रमा युज्येत तदहरुपवास्याऽऽप्लाव्याऽहते[2] वाससी परिधाप्य न्यग्रोधावरोहाञ्छुङ्गाँश्च निशायामुदपेषं पिष्ट्वा पूर्ववदासेचनम्—हिरण्यगर्भोऽद्भ्यः सम्भृत इत्येताभ्याम् ॥३॥ कुशकण्टकं[3] सोमांशुं चैके ॥४॥ कूर्मपित्तं[4] चोपस्थे कृत्वा स यदि कामयेत[5] वीर्यवान्त्स्यादिति[6] विकृत्यैनमभिमन्त्रयते—सुपर्णोऽसीति प्राग्विष्णुक्रमेभ्यः ॥५॥ ॥१६॥

—:o:—

# सप्तदशी कण्डिका

अथ सीमन्तोन्नयनम्[7] ॥१॥ पुंसवनवत् ॥२॥ प्रथमगर्भे मासे षष्ठेऽष्टमे वा ॥३॥ तिलमुद्गमिश्रं स्थालीपाकं श्रपयित्वा[8] प्रजापतेर्हुत्वा पश्चादग्नेर्भद्रपीठ उपविष्टायां युग्मेन सटालुग्रप्सेनौदुम्बरेण त्रिभिश्च दर्भपिञ्जुलैस्त्र्येण्या शलल्या

१. 'स्यन्दत' इति क. कोशे।

२. '०वास्याहता' इति घ. कोशे।

३. 'कुशकण्टं' इति क. कोशे।

४. जलपूर्णं शरावमित्यर्थः। विश्वनाथस्तु 'कूर्मपृष्ठनिर्मितं पात्रम्' इति व्याचख्यौ ५. 'कामयेत्' इति क. कोशे।

६. विकृतिच्छन्दस्कया। विकृतिच्छन्दसि ९२ अक्षराणि भवन्ति। 'विशिष्टया कृत्या कृतिच्छन्दस्कया सुपर्णोऽसि' इति जयरामः।

७. नोद्धृतं सूत्रं क. कोशे।

८. 'श्रपयित्वाज्यभागान्ते प्रजा०' इति ङ. कोशे।

वीरतरशङ्कुना पूर्णचात्रेण च सीमन्तमूर्ध्वं विनयति—भूर्भुवः स्वरिति ॥४॥ प्रतिमहाव्याहृतिभिर्वा ॥५॥ त्रिवृतमाबध्नाति—अयमूर्जावतो वृक्ष ऊर्जीव फलिनी भवेति ॥६॥ अथाह वीणागाथिनौ राजानꣳ सङ्गायेतां यो वाऽप्यन्यो वीरतर इति ॥७॥ नियुक्तामप्येके गाथामुपोदाहरन्ति—सोम एव नो राजेमा मानुषीः प्रजाः। अविमुक्तचक्र आसीरंगतीरे तुभ्यमसाविति यां नदीमुपावसिता भवति तस्या नाम गृह्णाति ॥८॥ ततो ब्राह्मणभोजनम् ॥९॥ ॥१७॥

—:०:—

# अष्टादशो कण्डिका

सोष्यन्तीमद्भिरभ्युक्षति—एजतु दशमास्य इति प्राग्यस्यैत इति ॥१॥ अथावरावपतनम्[1]—अवैतु पृश्नि शेवलꣳ शुने जराय्वत्तवे। नैव माꣳꣳसेन पीवरीं न कस्मिंश्चनायतनमवजरायु पद्यतामिति ॥२॥ जातस्य कुमारस्याच्छिन्नायां नाड्यां मेधाजननामुष्ये करोति ॥३॥ अनामिकया सुवर्णान्तर्हितया मधुघृते प्राशयति घृतं वा—भूस्त्वयि दधामि भुवस्त्वयि दधामि स्वस्त्वयि दधामि भूर्भुवः स्वः सर्वं त्वयि दधामीति ॥४॥ अथास्यायुष्यं करोति ॥५॥ नाभ्यां दक्षिणे वा कर्णे जपति—अग्निरायुष्मान्त्स वनस्पतिभिरायुष्माँस्तेन त्वाऽऽयुषाऽऽयुष्मन्तं करोमि। सोम आयुष्मान्त्स [2]ओषधीभिरायुष्माँस्तेन[3] त्वाऽऽयुषाऽऽयुष्मन्तं करोमि। ब्रह्मायुष्मत्तद्ब्राह्मणैरायुष्मत्तेन त्वाऽऽयुषाऽऽयुष्मन्तं करोमि। देवा

---

१. अवरावपतनम्=जराय्ववपतनम्। २. 'सौषधीभि०' इति च. कोशे।

३. क. कोशे इह उत्तरत्र च पुनः पुनः पठ्यमानः पाठो ० बिन्दुना संकेतितः।

आयुष्मन्तस्तेऽमृतेनायुष्मन्तस्तेन त्वाऽऽयुषाऽऽयुष्मन्तं करोमि। ऋषय आयुष्मन्तस्ते व्रतैरायुष्मन्तस्तेन त्वाऽऽयुषाऽऽयुष्मन्तं करोमि। पितर आयुष्मन्तस्ते स्वधाभिरायुष्मन्तस्तेन त्वाऽऽयुषाऽऽयुष्मन्तं करोमि। यज्ञ आयुष्मान्त्स दक्षिणाभिरायुष्माँस्तेन त्वाऽऽयुषाऽऽयुष्मन्तं करोमि। समुद्र आयुष्मान्त्स स्रवन्तीभिरायुष्माँस्तेन त्वाऽऽयुषाऽऽयुष्मन्तं करोमीति ॥६॥ त्रिस्त्रिस्त्र्यायुषमिति[1] ॥७॥ स यदि कामयेत सर्वमायुरियादिति वात्सप्रेणैनमभिमृशेत् ॥८॥ दिवस्परीत्येतस्यानुवाकस्योत्तमामृचं परिशिनष्टि ॥९॥ प्रतिदिशं पञ्च ब्राह्मणानवस्थाप्य ब्रूयादिममनुप्राणितेति ॥१०॥ पूर्वो ब्रूयात् प्राणेति ॥११॥ व्यानेति दक्षिणः ॥१२॥ अपानेत्यपरः ॥१३॥ उदानेत्युत्तरः ॥१४॥ समानेति पञ्चम उपरिष्टादवेक्षमाणो[2] ब्रूयात् ॥१५॥ स्वयं वा कुर्यादनुपरिक्राममविद्यमानेषु ॥१६॥ स यस्मिन् देशेजातो भवति तमभिमन्त्रयते—वेद ते भूमि[3] हृदयं दिवि चन्द्रमसि श्रितम्। वेदाहं तन्मां[4] तद्विद्यात् पश्येम शरदः शतं जीवेम शरदः शतँ शृणुयाम शरदः शतमिति ॥१७॥ अथैनमभिमृशति—अश्मा भव परशुर्भव हिरण्यमस्तुतं[5] भव। आत्मा वै[6] पुत्रनामाऽसि स जीव शरदः शतमिति ॥१८॥ अथास्य मातरमभिमन्त्रयते—इडासि मैत्रावरुणी वीरे वीरमजीजनथाः। सा त्वं वीरवती भव याऽस्मान् वीरवतोऽकरदिति ॥१९॥ अथास्यै दक्षिणँ स्तनं प्रक्षाल्य प्रयच्छति—इमँ स्तनमिति ॥२०॥ यस्ते स्तन इत्युत्तरमेताभ्याम् ॥२१॥ उदपात्रं शिरस्तो

---

१. अत्रापि क. कोशे ० बिन्दुनिर्देशं कृत्वा उत्तराणि नव सूत्राणि न पठितानि। २. 'अवेक्ष्यमाणो०' इति ग. कोशे।

३. विसर्गाभावश्छान्दस इति गदाधरः। ४. 'तन्मा' इति क. कोशे।

५. '०मस्तृतं' इति क. कोशे, '०मश्रुतं' इति ङ. कोशे।

६. 'आत्मैव पुत्र०' इति ङ. कोशे।

निदधाति—आपो[1] देवेषु जाग्रथ यथा देवेषु जाग्रथ । एवमस्याᳫं सूतिकायाᳫं सपुत्रिकायां जाग्रथेति ॥२२॥ द्वारदेशे सूतिकाग्निमुपसमाधायोत्त्थानात् सन्धिवेलयोः फलीकरणमिश्रान् सर्षपानग्नावावपति —शण्डा मर्का उपवीरः शौण्डिकेय उलूखलः । मलिम्लुचो द्रोणासश्च्यवनो नश्यतादितः स्वाहा । आलिखन्ननिमिषः किं वदन्तः उपश्रुतिर्हर्यक्षः कुम्भी शत्रुः [2]पात्रपाणिर्नृमर्णिर्हन्त्रीमुखः सर्षपारुश्च्यवनो नश्यतादितः स्वाहेति ॥२३॥ यदि कुमार उपद्रवेज्जालेन प्रच्छाद्योत्तरीयेण वा पिताऽङ्क आधाय जपति—कूर्कुरः सुकूर्कुरः कूर्कुरो बालबन्धनः । चेच्चेच्छुनक सृज नमस्ते अस्तु सीसरो लपेतापह्वर तत्सत्यम् । यत्ते देवा वरमददुः स त्वं कुमारमेव वा वृणीथाः । चेच्चेच्छुनक सृज नमस्ते अस्तु सीसरो लपेतापह्वर तत्सत्यम् । यत्ते सरमा माता सीसरः पिता श्यामशबलौ भ्रातरौ चेच्चेच्छुनक सृज नमस्ते अस्तु सीसरो लपेतापह्वरेति ॥२४॥ अभिमृशति—न नामयति न रुदति न हृष्यति न ग्लायति यत्र वयं वदामो यत्र चाभिमृशामसीति ॥२५॥ ॥१८॥

—:०:—

# एकोनविंशी कण्डिका

[3]अथातो यमलजनने प्रायश्चित्तं व्याख्यास्यामः ॥१॥ यस्य भार्य्या गौर्दासी महिषी वडवा वा विकृतं प्रसवेत् प्रायश्चित्ती भवेत् ॥२॥ पूर्णे दशाहे चतुर्णां क्षीरवृक्षाणां

१. 'शिरसो निदध्यात्यापो' इति क. कोशे ।

२. 'पात्रपाणि नृमणि०' इति क. कोशे ।

३. इयं कण्डिका नास्ति ङ. कोशे ।

कष यमुपसंहरेत् प्लक्षवटौदुम्बराश्वत्थशमीदेवदारुगौर-सर्षपास्तेषामयोमिश्रं [1]हिरण्यदूर्वाङ्कुराम्रपल्लवैरष्टौ[2] कलशान् प्रपूर्य सर्वौषधीनां च दम्पती स्नापयित्वापो[3] हि ष्ठेति तिसृभिः कया नश्चित्र इति द्वाभ्यां पञ्चैन्द्रेण पञ्च वारुणेने-दमापः[4] प्रवहतेत्यापाद्यमिति[5] स्नापयित्वाऽलङ्कृत्य तौ दर्भे-षूपवेश्य तत्र मारुतंस्थालीपाकं श्रपयित्वाज्यभागाविष्ट्वा-ऽऽज्याहुतीर्जुहोति पूर्वोक्तैः स्नपनमन्त्रैः[6] ॥३॥ स्थालीपाक-स्य जुहोति—अग्नये स्वाहा सोमाम स्वाहा पवमानाय स्वाहा पावकाय स्वाहा मरुताय[7] स्वाहा मारुताय स्वाहा[8] मरुद्भ्यः स्वाहा यमाय स्वाहान्तकाय स्वाहा मृत्यवे स्वाहा ब्रह्मणे स्वाहाऽग्नये स्विष्टकृते स्वाहेति ॥४॥ एतदेव [9]गृहोत्पातेषू-लूककपोतगृध्रः[10] श्येनो वा गृहं प्रविशेत् स्तम्भः प्ररोहेद् बल्मीकं मधुजालं वा भवेदुदकुम्भप्रज्वलनासनशयनयान भङ्गेषुगृहगोधिकाकृकलासशरीरसर्पणऽइत्येवं छत्रध्वजविनाशे सार्पे नैर्ऋते गण्डयोगेष्वन्येष्वप्युत्पातेषु भूकम्पोल्कापात-काकसर्पसङ्गमप्रेक्षणादिष्वेतदेव प्रायश्चित्तं ग्रहशान्त्युक्तेन

---

१. '०मयो हिरण्य०' इति च. कोशे।

२. '०पल्लवैः प्रकल्प्य तैरष्टौ' इति च. कोशे पाठान्तरम्।

३. 'स्नात्वा आपो' इति ग. कोशे।

४. पञ्चेन्द्रै पञ्च वारुणैरिदमापो' इति घ. कोशे।

५. '०त्यपाद्यमिति' च. कोशे। '०त्यपो अद्येति' इति शुद्धः पाठः। 'अपो अद्य' इति यजुर्वेदे २०।२२ पठ्यते। 'इदमापोऽपोऽअद्येति द्वाभ्यां स्नात्वा' इति च. कोशे पाठान्तरम्।

६. स्नानमन्त्रैः' इति घ. कोशे।

७. 'मरुताय' इत्यकारान्तस्य प्रयोगाश्चिन्त्यः।

८. 'मारुताय स्वाहा' इति नास्ति घ. कोशे।

९. 'गृहोत्पातनिमित्तेषू०' इति घ. कोशे।

१०. '०गृध्राः' इति पाठेन भाव्यम्।

विधिना कृत्वाऽऽचार्य्याय वरं दत्वा ब्राह्मणान् भोजयित्वा स्वस्तिवाच्याशिषः प्रतिगृह्य शान्तिर्भवति[1] ॥५॥ ॥१९॥

—:०:—

# विंशी कण्डिका

[2]अथ [3]यमलचरुं मारुतं व्याख्यास्यामः ॥१॥ यस्य च यमलौ पुत्रौ दारिका वा प्रजायेत ।२॥ पूर्णे दशाहे चतुर्णां क्षीरवृक्षाणां काषायमाहृत्याश्वत्थप्लक्षन्यग्रोधौदुम्बराश्चत्वारोऽविधवाः स्नापयति ब्रह्मचारिणो[4] वा शुक्लवससे ऽएन्द्री दिशमुदीचीं वा मङ्गलं पूर्ववदगायन्त्यो यमलिनीꣳस्नापयन्ति ॥३॥ आचार्य्यः स्नापयति—वसो पवित्रेण शतधारेण चाष्टभिः कलशैः ॥४॥ [5]स्नात्वाप्रतिरथं जपेद्—इदमापः प्रवहतेति च ॥५॥ तौ स्नापितौ वरं प्रयच्छत्यनडुहमातृभ्यश्च हिरण्यं वस्त्रमेवपरितोषणम् ॥६॥ वाजे वाजे ऽवतेति जपति ॥७॥ आघारं मारुतं चरुं जुहोति—मरुताय स्वाहा मारुताय स्वाहा मरुद्भ्यो विष्णवे प्रजापतये विश्वेभ्यो देवेभ्योऽग्नये स्विष्टकृते

---

१. 'शान्तिर्भवति पदयोर्द्विरावृत्तिः' घ. च. कोशयोः । अन्यत्रादर्शनाद् अनावश्यकः पाठः ।

२. इयं कण्डिका नास्ति ङ. कोशे । वस्तुत इयं कण्डिका पूर्वस्या कण्डिकायाः पूर्वार्धस्य (चतुर्थसूत्रान्तस्य) एव पाठभेदरूपाऽनावश्यकी ।

३. 'यगलचरु' इति च. कोशे ।

४. पूर्वकण्डिकानुसारं भार्यायाः प्रायश्चित्तित्वमुक्तम् । भार्यायाः स्नापनं ब्रह्मचारिणः कथं कर्तुं शक्नुवन्ति ? अतोऽत्र 'ब्रह्मचारिण्यो वा' इति पाठ उत्प्रेक्ष्यः । यद्वा पूर्वकण्डिकावद् दम्पत्योः स्नापनेऽभीष्टे सति भार्यामविधवास्त्रियः स्नापयेयुः, पतिं च ब्रह्मचारिणः । एतत् पक्षे 'वा' पदमसमर्थितं भवति ।

५. 'स्नापयित्वा' इति ख. कोशे ।

स्वाहेति ॥८॥ प्राशनान्ते शेषं चरुं गृहीत्वाऽश्वत्थं प्रदक्षिणी कृत्योपविशेत् ॥९॥ तदेवं तन्त्रꣳसमाप्य ततो ब्राह्मणभोजनम् ॥१०॥ ॥२०॥[1]

—:o:—

# एकविंशी कण्डिका

अथातो मूलविधिं व्याख्यास्यामः ॥१॥ मूलांशे प्रथमे पितुर्नेष्टो द्वितीये मातुस्तृतीये धनधान्यस्य चतुर्थे कुलशोकावहः स्वयं पुण्यभागी स्यात् ॥२॥ मूलनक्षत्रे मूलविधानं कुर्यात् ॥३॥ सर्वौषध्या सर्वगन्धैश्च संयुक्तं तत्रोदकुम्भं कृत्वा सवस्त्र-गन्धपुष्परत्नसहितꣳ श्वेतसिद्धार्थकुसुमायुक्तं कुर्यात् ॥४॥ तस्मिन् रुद्राञ्जपित्वा प्रतिरथꣳरक्षोघ्नं च सूक्तम् ॥५॥ द्वितीयोदकुम्भं कृत्वा चतुःप्रस्रवणसंयुक्तं [2]तस्मिन्नुपरिष्टान्मूलानि धारयेद्वंशपात्रे कृत्वा वस्त्रे बद्ध्वा ॥६॥ तस्मिन् प्रधानानि मूलानि वक्ष्याम्यष्टादशमाषꣳ[3] हिरण्मयमूलꣳ[4] सप्त धान्यानि प्रथमा कार्ष्मर्या सहदेव्यपराजिता बाला पाठा [5]शङ्खपुष्प्यधोपुष्पी मधुयष्टिका चक्राङ्किता मयूरशिखा काकजङ्घा कुमारीद्वयं जीवन्त्यपामार्गभृङ्गराजलक्ष्मणा सुलक्ष्मणा जाति[6] व्याघ्रपत्रश्चक्रमर्दकः सिद्धेश्वरोऽश्वत्थौदुम्बर-

---

१. एतदनन्तरं 'दशम्यामुत्थाप्य इति कात्यायनोक्त गृह्यपरिशिष्टे प्रथम काण्डे क्षेपकः स' इति पाठ उपलभ्यते घ. कोशे ।

२. 'तस्मिन्' इति नास्ति घ. कोशे ।

३. 'अष्टादशमाषं' इति नास्ति च. कोशे ।

४. 'हिरण्मयमूलं कृत्वा' इति घ. कोशे ।

५. 'शङ्खपुष्पिकाधो०' इति ग. कोशे ।

६. 'जाती' इति च. कोशे ।

पलाशप्लक्षवटार्कदूर्वारोहितशमीशतावरीत्येवमादि[1] मूलशतं पूरयित्वा, तस्मिन्निषिद्धानि मूलानि वक्ष्यामि—बैल्वधवनिम्बकदम्बराजवृक्षोक्षशालाप्रियालु[2] दधिकपित्थकोविदारश्लेष्मातकबिभीतकशाल्मलिररलुसर्वकण्टकिवर्जम् ॥७॥ तत्राभिषेकं कुर्य्यात्पितुः शिशोर्जनन्या—देवस्य त्वेति ॥८॥ औदुम्बर्यां[3] सन्दीमुदगग्रामास्तृणाति ॥९॥ तत्रासीनान्त्सम्यातेनैके[4]—नाभिषिञ्चति शिरसोऽध्यनुलोमꣳ शिरो मे श्रीर्यशो मुखमितिच[5] यथालिङ्गमङ्गानि सम्मृशति ॥१०॥ स्नानादूर्ध्वं[6] नैर्ऋतं स्थालीपाकꣳ[7] श्रपयित्वा कार्ष्मर्यमयꣳ स्रुक्स्रुवं प्रतप्य सम्मृज्यान्वारब्ध[8] आघारावाज्यभागौ हुत्वा सुन्वन्तमिति चतस्रः स्थालीपाकेन जुहुयात् ॥११॥ पञ्चदशाज्याहुतीश्चतुर्गृहीतेन जुहोति—कृणुष्वपाजऽइति पञ्च मा नस्तोकऽइति, द्वे या ते रुद्र शिवा तनूरिति, षडग्निरक्षाꣳसि सेधति, शुक्रशोचिरमर्त्यः[9] शुचिः पावक ईड्य इति त्वन्नः सोम विश्वतो रक्षाराजन्नघायतो न रिष्ये त्वावतः सखेति ॥१२॥ स्विष्टकृदादि प्राशनान्ते कृष्णा गौः कृष्णाश्च तिलाः हेममय-

---

१. 'रोहितकशमीत्यादि' इति ख. घ. कोशयोः ।

२. 'प्रयालु' इत्यपपाठः च. कोशे ।

३. 'औदुम्बर्यां' इति नास्ति ख. कोशे ।

४. '०सम्पात्रेणैके' इति ग. घ. कोशयोः ।

५. अयं पाठो घ. कोशे एव । युक्तश्चायं पाठः । अन्यत्र 'श्रीर्यश इति यथा' इत्येव ।

६. 'स्नात्वा तदूर्ध्वं' इति च. कोशे ।

७. अयं पाठो घ. कोश एव, अन्यत्र 'पायसꣳ' इति । अत्र घ. कोशस्थ एव पाठो युक्तः स्थालीपाकस्य निर्देशात् पायसस्य चानिर्देशाच्च ।

८. 'समृज्याभ्युक्ष्य पुनः प्रतप्यान्वारब्ध' इति घ. कोशे ।

९. 'शक्रज्योतिरमर्त्यः' इति च. कोशेऽपपाठः, तथाविध पाठस्यानुपलम्भात् ।

मूलꣳसप्तधान्यसंयुक्तमाचार्याय वरं दद्यात् ॥१३॥ कृष्णो ऽनड्वान् ब्रह्मणे[1] दद्यात् ॥१४॥ नक्षत्र सूचकेभ्यो वासो दद्याद् ॥१५॥ अन्येभ्यो ब्राह्मणेभ्यः सुवर्णं दद्यात् ॥१६॥ कृष्णागोपायसेन[2] ब्राह्मणान् भोजयेत् ॥१७॥ सार्पदैवते गण्डजातानामेष एव विधिः कात्यायनेनोक्तः कात्यायनेनोक्तः[3] ॥१८॥ ॥२१॥

—:०:—

# द्वाविंशी कण्डिका

दशम्यामुत्थाप्य ब्राह्मणान् भोजयित्वा[4] पिता नाम करोति ॥१॥ द्व्यक्षरं चतुरक्षरं वा घोषवदाद्यन्तरन्तःस्थं दीर्घाभिनिष्ठानं कृतं कुर्यान्न तद्धितम् ॥२॥ अयुजाक्षरमाकारान्तꣳस्त्रियै तद्धितम् ॥३॥ शर्म ब्राह्मणस्य वर्म क्षत्रियस्य गुप्तेति वैश्यस्य ॥४॥ चतुर्थे मासि निष्क्रमणिका ॥५॥ सूर्यमुदीक्षयति—तच्चक्षुरिति ॥६॥ ॥२२॥

—:०:—

---

१. 'ब्राह्मणे' इति ग. घ. कोशयोः ।

२. 'कृष्णापायसेन' इति ग. कोशे । 'कृसरान्नपायसेन' इति च. कोशे ।

३. द्विरावृत्तिर्नास्ति ग. कोशे । 'कात्ययनोक्तः कृते शान्तिर्भवति शान्तिर्भवतीति' इति घ. कोशे ।

विशेषः—वस्तुतोऽत्र एकोनविंशति-विंशति-एकविंशतिसंख्याकास्तिस्त्र कण्डिकाः प्रक्षिप्ता एव ।

४. 'ब्राह्मणान् भोजयित्वा' इति नास्ति क. कोशे ।

# त्रयोविंशी कण्डिका

प्रोष्येत्य गृहानुपतिष्ठते पूर्ववत् ॥१॥ पुत्रं दृष्ट्वा जपति–अङ्गादङ्गात् सम्भवसि हृदयादधिजायसे। आत्मा वै पुत्रनामासि स जीव शरदः शतमिति ॥२॥ अथास्य मूर्द्धानमवजिघ्रति—प्रजापतेष्ट्वा हिङ्कारेणावजिघ्रामि सहस्रायुषाऽसौ जीव शरदः शतमिति ॥३॥ गवां त्वा हिङ्कारेणेति च त्रिः, दक्षिणेऽस्य कर्णे जपति—अस्मे प्रयन्धि मघवन्नृजीषिन्निन्द्ररायो विश्ववारस्य भूरेः। अस्मे[1] शतꣳशरदो जीवसेऽधा अस्मे वीराञ्छाश्वत इन्द्र शिप्रिन्निति ॥४॥ इन्द्र श्रेष्ठानि द्रविणानि धेहि चित्तिं दक्षस्य सुभगत्वमस्मे। पोषꣳ रयीणामरिष्टिं तनूनाꣳ स्वात्मानं वाचः सुदिनत्वमह्नामिति सव्ये ॥५॥ स्त्रियै तु मूर्द्धानमेवावजिघ्रति तूष्णीम् ॥६॥ ॥२३॥

—:०:—

# चतुर्विंशी कण्डिका

षष्ठे मासेऽन्नप्राशनम् ॥१॥ स्थालीपाकꣳश्रपयित्वाऽऽज्यभागाविष्ट्वाऽऽज्याहुती जुहोति—देवीं वाचमजनयन्त देवास्तां विश्वरूपाः पशवो वदन्ति। सा नो मन्द्रेषमूर्जं दुहाना धेनुर्वागस्मानुपसुष्टुतैतु स्वाहेति ॥२॥ वाजो नो अद्येति च द्वितीयाम् ॥३॥ स्थालीपाकस्य जुहोति—प्राणेनान्नमशीय स्वाहाऽपानेन गन्धानशीय स्वाहा चक्षुषा रूपाण्यशीय स्वाहा श्रोत्रेण यशोऽशीय स्वाहेति ॥४॥ प्राशनान्ते सर्वान् रसान्त्सर्वमन्नमेकत उद्धृत्याथैनं प्राशयेत् ॥५॥ तूष्णीꣳहन्तेति वा

१. 'अस्मै' इति ग, घ. कोशयोः।

हन्तकारं मनुष्या इति श्रुतेः ॥६॥ भारद्वाज्या मांसेन वाक्प्रसारकामस्य[1] ॥७॥ कपिञ्जलमांसेनान्नाद्यकामस्य ॥८॥ मत्स्यैर्जवनकामस्य ॥९॥ कृकषाया आयुष्कामस्य ॥१०॥ आटचा ब्रह्मवर्चस कामस्य ॥११॥ सर्वैः सर्वकामस्य ॥१२॥ अन्नपर्याय वा ततो ब्रह्माणभोजनमन्नपर्याय वा ततो ब्राह्मणभोजनम्[2] ॥१३॥ ॥२४॥

इति श्रीमत्कात्यायन-विरचिते गृह्यसूत्रे

प्रथमं काण्डं समाप्तम्[3]

—:०:—

१. 'वाक्प्रसारिकामस्य' इति ग. कोशे।

२. प्राचीनलेखकपद्धत्यनुसारम् अध्यायकाण्डादिपरिसमाप्तिद्योतनाय अन्त्यमेकं द्वे वा पदे पुनः पठ्यते। इह सर्वस्य सूत्रस्य पुनः पाठश्चिन्त्य इव प्रतिभाति।

३. श्रीमत्कात्यायन-गृह्ये प्रथमं काण्डं समाप्तम्। इति ग. कोशे। 'इति कात्यायन-सूत्रे प्रथमकाण्डः समाप्तः' इति ङ. कोशे। 'इति पारस्करविरचिते माध्यन्दिने गृह्यसूत्रे प्रथमकाण्डं समाप्तम्' इति घ. कोशे। 'इति पारस्करगृह्यसूत्रे प्रथमकाण्डं समाप्तम्' इति च. कोशे।

# अथ द्वितीयं काण्डम्

## प्रथमा कण्डिका

सांवत्सरिकस्य चूडाकरणम् ॥१॥ तृतीये वाऽप्रतिहते ॥२॥ षोडशवर्षस्य केशान्तः[1] ॥३॥ यथामङ्गलं वा सर्वेषाम् ॥४॥ ब्राह्मणान्भोजयित्वा माता कुमारमादायाप्लाव्याहते वाससी परिधाप्याङ्क आधाय पश्चादग्नेरुपविशति ॥५॥ अन्वारब्ध आज्याहुतीर्हुत्वा प्राशनान्ते शीतास्वप्सूष्णा आसिञ्चति—उष्णेन वाय उदकेनेह्यदिते केशान्वपेति ॥६॥ केशश्मश्रिवति च केशान्ते ॥७॥ अथात्र नवनीतपिण्डं घृतपिण्डं दध्नो वा प्रास्यति[2] ॥८॥ तत आदाय दक्षिणं गोदानमुन्दति—सवित्रा प्रसूता दैव्या आप उन्दन्तु ते तनूं दीर्घायुत्वाय वर्चस इति ॥९॥ त्र्येण्या शलल्या विनीय त्रीणि कुशतरुणान्यन्तर्दधाति—ओषध इति ॥१०॥ शिवो नामेति लोहक्षुरमादाय निवर्तया-मिति प्रवपति[3] —येनावपत् सविता क्षुरेण सोमस्य राज्ञो वरुणस्य विद्वान्। तेन ब्रह्माणो वपतेदमस्यायुष्यं [4]जरदष्टिर्यथा-ऽसदिति ॥११॥ सकेशानि प्रच्छिद्यानडुहे गोमयपिण्डे प्रास्य-त्युत्तरतो ध्रियमाणे ॥१२॥ एवं द्विरपरं तूष्णीम् ॥१३॥ इतरयो-श्चोन्दनादि ॥१४॥ अथ पश्चात् त्र्यायुषमिति ॥१५॥ अथोत्तरतो येन भूरिश्चरा दिवं ज्योक्च पश्चाद्धि सूर्यम्। तेन ते वपामि ब्रह्मणा जीवातवे जीवनाय सुश्लोक्याय स्वस्तय इति ॥१६॥ त्रिः क्षुरेण शिरः प्रदक्षिणं परिहरति समुखं

---

१. 'केशान्तो वा' इति घ. कोशे। २. 'प्राश्यति' इति ग. कोशे।
३. 'वपति' इति ग. कोशे। ४. 'जरदृष्टिर्यथा' इति क. कोशे।

केशान्ते ॥१७॥ यत्क्षुरेण मज्जयता[1] सुपेशसा वप्त्वा[2] वा वपति केशाञ्छिन्धि शिरो माऽस्यायुः प्रमोषीः ॥१८॥ मुखमिति च केशान्ते ॥१९॥ ताभिरद्भिः शिरः समुद्य नापिताय क्षुरं प्रयच्छति—अक्षण्वन्पारिवपेति ॥२०॥ यथामङ्गलं केशशेषकरणम् ॥२१॥ अनुगुप्तमेतँ सकेशं गोमयपिण्डं निधाय गोष्ठे पल्वल उदकान्ते वाऽऽचार्याय वरं ददाति ॥२२॥ गां केशान्ते ॥२३॥ संवत्सरं ब्रह्मचर्यमवपनं च केशान्ते द्वादशरात्रँ षड्रात्रं त्रिरात्रम्न्ततः ॥२४॥ ॥१॥

—:०:—

## द्वितीया कण्डिका

अथ कर्णवेधो वर्षे तृतीये पञ्चमे वा ॥१॥ पुष्येन्दुचित्राहरिरेवतीषु ॥२॥ पूर्वाह्णे कुमारस्य मधुरं दत्वा प्राङ्मुखायोपविष्टाय[3] दक्षिणं कर्णमभिमन्त्रयते—भद्रं कर्णेभिरिति सव्यं—वक्ष्यन्तीवेदिति च[4] ॥३॥ अथ भिन्द्यात् ॥४॥ ततो ब्राह्मणभोजनम् ॥५॥ ॥२॥

—:०:—

---

१. 'मज्जथिता' इति क. कोशे।

२. 'वप्ता' इति क. कोशे। अयमेव च पाठो युक्तोऽर्थानुरोधात्।

३. 'पूर्वाह्णे प्राङ्मुखोपविष्टाय कुमारस्य मधुरं दत्वा' इति ग. कोशे।

४. 'सव्यं वक्ष्यन्तीवेदेति चाथ भिन्द्यात्' इति नास्ति ग. कोशे। 'पूर्वाह्णे प्राङ्मुखोपविष्टस्य भद्रं कर्णेभिरिति दक्षिणं कर्णममिमन्त्रयते वक्ष्यन्तीवेदिति सव्यं कुमारस्य मधुरं दत्वा चाथ भिन्धात्' इति क्रमविपर्ययेण घ. कोशे। पारस्करगृह्यव्याख्यात्रा गदाधरेण नामकरणसंस्कारभाष्ये (पार० १,१७। पृष्ठ १५६, वेङ्कटेश्वरसंस्क०) इयं कण्डिका 'अथ कर्णवेधः। तत्र याज्ञिकाः पठन्ति' इत्युक्त्वा। 'अथ कर्णवेधो ॥ वर्षे···ततो ब्राह्मणभोजनम्' इति यथामुद्रितमुद्ध्रियते।

# तृतीया कण्डिका

अष्टवर्षं ब्राह्मणमुपनयेद् गर्भाष्टमे वा॥१॥ एकादशवर्षँ राजन्यम् ॥२॥ द्वादशवर्षं वैश्यम्॥३॥ यथामङ्गलं वा सर्वेषाम् ॥४॥ ब्राह्मणान् भोजयेत् तं च पर्युप्तशिरसमलङ्कृतमानयन्ति ॥५॥ पश्चादग्नेरवस्थाप्य ब्रह्मचर्यमागामिति वाचयति ब्रह्मचार्यसानीति च ॥६॥ अथैनं वासः परिधापयति—येनेन्द्राय बृहस्पतिर्वासः पर्यदधादमृतम्। तेन त्वा परिदधाम्यायुषे दीर्घायुत्वाय बलाय वर्चस इति ॥७॥ मेखलां बध्नीते—इयं दुरुक्तं परिबाधमाना वर्णं पवित्रं पुनती म आगात्। प्राणापानाभ्यां बलमादधाना स्वसा देवी सुभगा मेखलेयमिति॥८॥ युवा सुवासाः परिवीत आगात् स उ श्रेयान् भवति जायमानः। तं धीरासः कवयः उन्नयन्ति स्वाध्यो मनसा देवयन्त इति वा ॥९॥ तूष्णीं वा ॥१०॥ [1]अत्र यज्ञोपवीतपरिधानम्[2]—[3]यज्ञोपवीतं परमं पवित्रं प्रजापतेर्यद् सहजं पुरस्ता। आयुष्यमग्र्यं प्रतिमुञ्च शुभ्रं यज्ञोपवीतं बलमस्तु तेजः। यज्ञोपवीतमसि यज्ञस्य त्वा यज्ञोपवीतेनोपनह्यामीति ॥११॥ अथाजिनं प्रयच्छति—मित्रस्य चक्षुर्धरुणं बलीयस्तेजो यशस्वि स्थविरँ समिद्धम्। अनाहनस्यं वसनं जरिष्णुः परीदं वाज्यजिनं दधेऽहमिति[4] तूष्णीं वा ॥१२॥ दण्डं प्रयच्छति ॥१३॥ तं प्रतिगृह्णाति—यो मे दण्डः परापतद्

---

१. इत आरभ्य 'दधेऽहमिति तूष्णीं वा' इत्यन्तः पाठो च. कोशे ( ) कोष्ठके वर्तते।

२. 'अत्र…०परिधानम्' इति घ. कोशे नास्ति।

३. इत आरभ्य 'दधेऽहमिति' इत्यन्तः पाठः पारस्करगृह्यसूत्रेऽपठितोऽपि छ. कोशे ( ) कोष्ठके पठ्यते।

४. 'दधेयमिति' इति ग. कोशे पाठः।

वैहायसोऽधिभूम्याम् । तमहं पुनरादद आयुषे ब्रह्मणे ब्रह्मवर्चसायेति ॥१४॥ दीक्षावदेके दीर्घसत्रमुपैतीति वचनात् ॥१५॥अथास्याद्भिरञ्जलिनाऽञ्जलिं पूरयति—आपो हि ष्ठेति तिसृभिः ॥१६॥ अथैनꣳ सूर्यमुदीक्षयति—तच्चक्षुरिति॥१७॥ अथास्य दक्षिणाꣳसमधि हृदयमालभते—मम व्रते ते हृदयं दधामि । मम चित्तमनुचित्तं ते अस्तु । मम वाचमेकमना जुषस्व बृहस्पतिष्ट्वा नियुनक्तु मह्यमिति ॥१८॥ अथास्य दक्षिणꣳ हस्तं गृहीत्वाह—को नामासीति ॥१९॥ असावहं भो३इति प्रत्याह ॥२०॥ अथैनमाह—कस्य ब्रह्मचार्यसीति ॥२१॥ भवत इत्युच्यमान इन्द्रस्य[1] ब्रह्मचार्यस्यग्निराचार्यस्तवाहमाचार्यस्तवासाविति ॥२२॥ अथैनं भूतेभ्यः परिददाति[2]—प्रजापतये त्वा परिददामि देवाय त्वा सवित्रे परिददाम्यद्भ्यस्त्वौषधीभ्यः परिददामि द्यावापृथिवीभ्यां त्वा परिददामि विश्वेभ्यस्त्वा देवेभ्यः[3] परिददामि सर्वेभ्यस्त्वा भूतेभ्यः परिददाम्यरिष्ट्या इति ॥२३॥ ॥३॥

—:०:—

# चतुर्थी कण्डिका

प्रदक्षिणमग्निं परीत्योपविशति ॥१॥ अन्वारब्ध आज्याहुतोर्हुत्वा प्राशनान्तेऽथैनꣳ सꣳशास्ति—ब्रह्मचार्यस्यपोशान कर्म कुरु मा दिवा सुषुप्था वाचं यच्छ[4] समिधमाधेह्यपोशा-

---

१. 'इत्युच्यमान इन्द्रस्य' इति नास्ति ग. कोशे ।

२. 'परिददामि' इति ग. कोशे ।

३. 'भूतेभ्यः' इति क. ग. कोशयोः । क. कोशे 'भ्य' इति मुद्रणदोषान्नोपलभ्यते ।

४. 'यच्छ' इति नास्ति क. कोशे ।

नेति ॥२॥ अथाऽस्मै सावित्रीमन्वाहोत्तरतोऽग्नेः प्रत्यङ्मुखायोपविष्टायोपसन्नाय समीक्षमाणाय समीक्षिताय ॥३॥ दक्षिणतस्तिष्ठत आसीनाय वैके ॥४॥ पच्छोऽर्द्धर्चशः सर्वां च तृतीयेन सहानुवर्तयन् ॥५॥ संवत्सरे षण्मास्ये[1] चतुर्विंशत्यहे द्वादशाहे षडहे त्र्यहे वा ॥६॥ सद्यस्त्वेव गायत्रीं ब्राह्मणायानुब्रूयाद् आग्नेयो वै ब्राह्मण इति श्रुतेः ॥७॥ त्रिष्टुभं राजन्यस्य ॥८॥ जगतीं वैश्यस्य ॥९॥ सर्वेषां वा गायत्रीम् ॥१०॥ ॥४॥

—:०:—

# पञ्चमी कण्डिका

अथ समिदाधानम्[2] ॥१॥ पाणिनाऽग्निं परिसमूहति—अग्ने सुश्रवः सुश्रवसं मा कुरु यथा त्वमग्ने सुश्रवः सुश्रवा अस्येवं माᳬ सुश्रवः सौश्रवसं कुरु यथा त्वमग्ने देवानां यज्ञस्य निधिपा अस्येवमहं मनुष्याणां वेदस्य[3] निधिपो भूयासमिति ॥२॥ प्रदक्षिणमग्निं पर्युक्ष्योत्तिष्ठन्त्समिधमादधाति—अग्नये समिधमाहार्षं बृहते जातवेदसे यथा त्वमग्ने समिधा समिध्यस एवमहमायुषा मेधया वर्च्चसा प्रजया पशुभिर्ब्रह्मवर्चसेन समिन्धे जीव पुत्रो ममाचाय मेधाव्यहमसान्यनिराकरिष्णुर्यशस्वी तेजस्वी ब्रह्मवर्चस्यन्नादो भूयासंस्वाहेति ॥३॥

---

१. 'षाण्मास्ये' इति क. कोशे। 'षण्मास्ये' इत्यत्राहतुर्हरिहरगदाधरौ—'षडेव मासा षण्मास्यं, स्वार्थे तद्धितश्छान्दसो वृद्धिलोपः। क. कोशीये पाठे तु छान्दसो वृद्धिलोपो वृद्ध्यभावो वा न वक्तव्यो भवति। चातुवर्ण्यादिवत् (अष्टा० ५।१।१२४) स्वार्थे ष्यञ् प्रत्ययः।

२. इदं सूत्रं क. कोशे नोपलभ्यते।

३. 'देवस्य' इति क. कोशे।

एवं द्वितीयां तथा तृतीयाम् ॥४॥ एषा त इति वा समुच्चयो वा ॥५॥ पूर्ववत् परिसमूहनपर्युक्षणे ॥६॥ पाणी प्रतप्य मुखं विमृष्टे—तनूपा अग्नेऽसि तन्वं मे पाह्यायुर्दा अग्नेऽस्यायुर्मे देहि व्वचोर्दा अग्नेऽसि व्वर्चो मे देहि। अग्ने यन्मे तन्वा ऊनं तन्म आपृण ॥७॥ मेधां मे देवी सरस्वती आदधातु मेधामश्विनौ देवावाधत्तां पुष्करस्रजाविति ॥८॥ [1]अङ्गान्यालभ्य जपति—अङ्गानि च म आप्यायन्तां वाक्प्राणश्चक्षुः श्रोत्रं यशो बलमिति [2]त्र्यायुषाणि करोति भस्मना ललाटे ग्रीवायां दक्षिणेऽंसे हृदि च त्र्यायुषमिति प्रतिमन्त्रम् ॥९॥ ॥५॥

—:o:—

## षष्ठी कण्डिका

अत्र भिक्षाचर्यचरणम् ॥१॥ भवत्पूर्वां ब्राह्मणो भिक्षेत ॥२॥ भवन्मध्याᳫं राजन्यः ॥३॥ भवदन्त्यां वैश्यः ॥४॥ तिस्रोऽप्रत्याख्यायिन्यः ॥५॥ षड् द्वादशापरिमिता वा ॥६॥ मातरं प्रथमामेके ॥७॥ आचार्याय भैक्षं निवेदयित्वा वाग्यतोऽहःशेषं तिष्ठेदित्येके ॥८॥ अहिंसन्नरण्यात् समिधमाहृत्य[3] तस्मिन्नग्नौ पूर्ववदाधाय वाचं विसृजते ॥९॥ अधःशाय्यक्षारालवणाशी स्यात् ॥१०॥ दण्डधारणमग्निपरिचरणं गुरुशुश्रूषा भिक्षाचर्या ॥११॥ मधुमाᳫंसमज्जनोपर्यासनस्त्रीगमनानृतादत्तादानानि वर्जयेत् ॥१२॥ अष्टाचत्वारिंशद्वार्षाणि

---

१. इत आरभ्य 'प्रतिमन्त्रम्' इति पारस्करगृह्येऽपठितोऽपि भागो ( ) कोष्ठके पठ्यते। व्याख्याकाराश्च सूत्रान्तरादेतेषां कर्मणां समुच्चयं वदन्ति।

२. 'त्र्यायुषाणि···प्रतिमन्त्रम्' इति क. कोशे नोपलभ्यते।

३. 'समिध आहृत्य' इति घ. छ. कोशयोः।

वेदब्रह्मचर्यं चरेत् ॥१३। द्वादश द्वादश वा प्रतिवेदम् ॥१४॥ यावद्ग्रहणं वा ॥१५॥ [1]वासांसि शाणक्षौमाविकानि॥१६॥ ऐणेयमजिनमुत्तरीयं ब्राह्मणस्य ॥१७॥ रौरवँ राजन्यस्य ॥१८॥ आजं गव्यं वा वैश्यस्य ॥१९॥ सर्वेषां वा गव्यमसति प्रधानत्वात् ॥२०॥ मौञ्जी रशना ब्राह्मणस्य ॥२१॥ धनुर्ज्या राजन्यस्य ॥२२॥ मौर्वी वैश्यस्य ॥२३॥ मुञ्जाभावे कुशाश्मन्तकबल्वजानाम् ॥२४॥ पालाशो ब्राह्मणस्य दण्डः ॥२५॥ बैल्वो राजन्यस्य ॥२६॥ औदुम्बरो वैश्यस्य ॥२७॥ केशसम्मितो ब्राह्मणस्य ललाटसम्मितः क्षत्रियस्य घ्राणसम्मितो वैश्यस्य ॥२८॥ सर्वे वा सर्वेषाम् ॥२९॥ आचार्येणाहूत उत्थाय प्रतिशृणुयात् ॥३०॥ शयानं चेदासीन आसीनं चेत्तिष्ठंस्तिष्ठन्तं चेदभिक्रामन्नभिक्रामन्तं चेदभिधावन् ॥३१॥ स एवं वर्त्तमानोऽमुत्राद्य वसत्यमुत्राद्य वसतीति तस्य स्नातकस्य कीर्तिर्भवति ॥३२॥ त्रयः स्नातका भवन्ति—विद्यास्नातको व्रतस्नातको विद्याव्रतस्नातक इति ॥३३॥ समाप्य वेदमसमाप्य व्रतं यः समावर्तते स विद्यास्नातकः ॥३४॥ समाप्य व्रतमसमाप्य वेदं यः समावर्तते स व्रतस्नातकः ॥३५॥ उभयँ समाप्य यः समावर्तते स विद्याव्रतस्नातक इति ॥३६॥ आ षोडशाद्वर्षाद् ब्राह्मणस्य नातीतः कालो भवति ॥३७॥ [3]आ द्वाविँशाद् राजन्यस्य ॥३८॥ आ चतुर्विँशाद् वैश्यस्य ॥३९॥ अत ऊर्ध्वं पतितसावित्रीका भवन्ति ॥४०॥ नैनानुप-

---

१. इत आरभ्य 'सर्वे वा सर्वेषाम्' इत्यन्तः पाठो क. कोशे नोद्ध्रियते ।

२. सूत्रमिदं च. कोशे ( ) कोष्ठे पठ्यते । पारस्करगृह्येऽपठितोऽपि ( ) कोष्ठके मुद्र्यते । अत्राह गदाधरः—'इदं च सूत्रं सूत्रत्वेन हरिहरभाष्ये तिष्ठति । भर्तृयज्ञकर्कादिग्रन्थेषु नोपलभ्यते' इति ।

३. इत आरभ्याऽऽकण्डिकान्तः पाठो क. कोशे नोद्ध्रियते ।

नयेयुर्नाध्यापयेयुर्न याजयेयुर्न चैभिर्व्यवहरेयुः ॥४१॥ काला-
तिक्रमे नियतवत् ॥४२॥ त्रिपुरुषं पतितसावित्रीकाणामपत्ये-
ऽसंस्कारो नाध्यापनं च ॥४३॥ तेषाᳬ संस्कारेप्सुर्व्रात्यस्तो-
मेनेष्ट्वा काममधीयीरन् व्यवहार्या भवन्तीति वचनात् ॥४४॥
॥६॥

—:o:—

# सप्तमी कण्डिका

अथोपनीतो ब्राह्मणस्त्रिशिखः शिखी जटिलो मुण्डो
वाक्षारालवणाशी स्यात् सावित्रᳬ षड्रात्रं त्रिरात्रं सद्यःकालं
वा चरेत् ॥१॥ तदेव व्रतमुदीक्ष्य दण्डमपोनिधाय मेखलां
यज्ञोपवीतं [1]चाप्स्वन्तरिति प्रत्यृचम् ॥२॥ नमो वरुणायेति
त्रिमधुरं दत्त्वा ततोऽस्याग्नेयं प्रथमं वेदव्रतमादिशेद् ब्राह्मण-
क्षत्रियविशां पञ्चसांवत्सरिकाणि वेदव्रतानि भवन्ति—
आग्नेयᳬ शुक्रियमौपनिषदᳬ शौलभं गोदानमिति ॥३॥
पञ्चसांवत्सरिकाणि वेदव्रतानि चरित्वा स्नात्वोपव्रतं चरेत्
त्रिष्ववगुण्ठनᳬ शुक्रियादिषु शुक्रियᳬ शुक्राभिः श्रावयेद्
औपनिषदमौपनिषद्भिः शौलभᳬ शौलभिनीभिः॥४॥ अथ वा
विद्यमान आ ब्रह्मन्नुदीरतामा नो भद्रा आशुः शिशान इमा
नुक मिति च वेद शिरसाऽवगुण्ठयेदवगुण्ठनीं त्रिवलिं पञ्चवलिं
वा नाभिदेशात् प्रच्छाद्य वाग्यतोऽरण्येऽधः शयीत ग्रामे गोष्ठे
देवतायतने वा ॥५॥ व्युष्टायामवगुण्ठनीमरण्ये विसृजेदद्दश-
मस्योदुत्यं चित्रन्देवानामित्युदितेऽर्के जपति वर्षति द्यौः शान्ति-

---

१. 'चाश्वंतरिति' क. कोशे ।

रिति शान्तिं करोति शान्तिभाजनं गुरवे दद्याद् एवमेवावगुण्ठनीं च ॥६॥ गोदाने गोमिथुनं तस्माद् गोदानमिति तस्माद् गोदानमिति[1] ॥७॥ ॥७॥

—:०:—

# अष्टमी कण्डिका

वेदꣳ समाप्य स्नायात् ॥१॥ ब्रह्मचर्यं वाऽष्टाचत्वारिꣳशकम् ॥२॥ द्वादशकेऽप्येके ॥३॥ गुरुणाऽनुज्ञातः ॥४॥ विधिर्विधेयस्तर्कश्च वेदः ॥५॥ षडङ्गमेके ॥६॥ न कल्पमात्रे ॥७॥ कामं तु याज्ञिकस्य ॥८॥ उपसङ्गृह्य गुरुꣳ समिधोऽभ्याधाय परिश्रितस्योत्तरतः कुशेषु प्रागग्रेषु पुरस्तात्स्थित्वाऽष्टानामुदकुम्भानाम् ॥९॥ ये अप्स्वन्तरग्नयः प्रविष्टा गोह्य उपगोह्यो मयूषो[2] मनोहास्खलो विरुजस्तनूदूषुरिन्द्रियहा तान्विजहामि[3] यो रोचनस्तमिह गृह्णामीत्येकस्मादपो गृहीत्वा ॥१०॥ तेनाभिषिञ्चते—तेन मामभिषिञ्चामि श्रियै यशसे ब्रह्मणे ब्रह्मवर्चसायेति ॥११॥ येन श्रियमकृणुतां येनावमृशताꣳ सुराम् । येनाक्ष्यावभ्यषिञ्चतां यद्वां तदश्विना यश इति॥१२॥ आपो हि ष्ठेति च प्रत्यृचम् ॥१३॥ त्रिभिस्तूष्णीमितरैः ॥१४॥ उदुत्तममिति मेखलामुन्मुच्य दण्डं निधाय वासोऽन्यत्परिधायादित्यमुपतिष्ठते ॥१५॥ उद्यन्भ्राजभृष्णुरिन्द्रो[4] मरुद्भिरस्थात्

---

१. द्विरुक्तिरत्र नापेक्ष्यते, अन्यत्र कण्डिकान्ते द्विरुक्तरदर्शनात् ।

२. 'मयूखो' इति ग. घ. कोशयोः ।

३. '०तनूदूषिरिन्द्रियहा अति तान् सृजानि' इति जयरामसम्मतः पाठः ।

४. 'भ्राजभ्रष्टिरिन्द्रो०' इति 'भ्राजभृष्टिरिन्द्रो०' इति च पाठान्तरे छ. कोशे टिप्पण्यां निर्दिष्टे ।

प्रातर्यावभिरस्थाद् दशसनिरसि दशसनिं मा कुर्वाविदन्मा गमय। उद्यन्भ्राजभृष्णुरिन्द्रो मरुद्भिरस्थाद् दिवा यावभिरस्थाच्छतसनिरसि शतसनिं मा कुर्वाविदन्मा गमय। उद्यन्भ्राजभृष्णुरिन्द्रो मरुद्भिरस्थात् सायं यावभिरस्थात् सहस्रसनिरसि सहस्रसनिं मा कुर्वाविदन्मा गमयेति ॥१६॥ दधि तिलान् वा प्राश्य जटालोमनखानि[1] सꣳहृत्यौदुम्बरेण दन्तान् धावेत। अन्नाद्याय व्यूहध्वꣳ सोमो राजाऽयमागमत्। स मे मुखं प्रमार्क्ष्यते यशसा च भगेन चेति ॥१७॥ उत्साद्य[2] पुनः स्नात्वाऽनुलेपनं नासिकयोर्मुखस्य चोपगृह्णीते—प्राणापानौ मे तर्पय चक्षुर्मे तर्पय श्रोत्रं मे तर्पयेति ॥१८॥ पितरः शुन्धध्वमिति पाण्योरवनेजनं दक्षिणा निषिच्यानुलिप्य जपेत्—सुचक्षा अहमक्षीभ्यां[3] भूयासꣳ सुवर्चा मुखेन। सुश्रुत्कर्णाभ्यां भूयासमिति ॥१९॥ अहतं वासो धौतं [4]वाऽमौत्रेणाच्छादयीत—परिधास्यै यशोधास्यै दीर्घायुत्वाय जरदष्टिरस्मि। शतं च जीवामि शरदः पुरूची रायस्पोषमभिसंव्ययिष्य इति ॥२०॥ अथोत्तरीयम्—यशसा मा द्यावापृथिवी यशसेन्द्राबृहस्पती। यशो भगश्च मा विन्दद्यशो मा प्रतिपद्यतामिति ॥२१॥ एकं चेत्पूर्वस्योत्तरवर्गेण प्रच्छादयीत ॥२२॥ सुमनसः प्रतिगृह्णाति—या आहरज्जमदग्निः श्रद्धायै मेधायै कामायेन्द्रियाय। ता अहं प्रतिगृह्णामि यशसा च भगेन चेति ॥२३॥ अथावबध्नीते—यद्यशोऽप्सरसामिन्द्रश्चकार विपुलं पृथु। तेन सङ्ग्रथिताः सुमनस

---

१. '०नखान्' इति क. कोशे।

२. 'पुच्छाद्य' इति क. कोशेऽपपाठः।

३. 'अक्षिभ्यां' इति घ. कोशे।

४. 'ऽमैत्रेण' इति छ. कोशेऽपपाठः। 'मौत्रो रजकस्तद्भिन्नेन धौतम्' इत्यर्थः।

आबध्नामि यशोमयीति ॥२४॥ उष्णीषेण शिरोवेष्टयते—युवा सुवासा इति ॥२५॥ अलङ्करणमसि भूयोऽलङ्करणं भूयादिति कर्णवेष्टकौ ॥२६॥ वृत्रस्येत्यङ्क्तेऽक्षिणी ॥२७॥ रोचिष्णुरसीत्यात्मानमादर्शे प्रेक्षते ॥२८॥ छत्रं प्रतिगृह्णाति—बृहस्पतेश्छदिरसि पाप्मनो मामन्तर्धेहि तेजसो यशसो माऽन्तर्धेहीति ॥२९॥ प्रतिष्ठे स्थो विश्वतो मा पातमित्युपानहौ प्रतिमुञ्चते ॥३०॥ विश्वाभ्यो मा नाष्ट्राभ्यस्परि पाहि सर्वत इति वैष्णवं दण्डमादत्ते ॥३१॥ दन्तप्रक्षालनादीनि नित्यमपि वासश्छत्रोपानहश्चापूर्वाणि चेन्मन्त्रः ॥३२॥ ॥८॥

—:o:—

# नवमी कण्डिका

स्नातस्य [1]यमान् वक्ष्यामः ॥१॥ कामादितरः ॥२॥ नृत्यगीतवादित्राणि न कुर्यान्न च गच्छेत् ॥३॥ कामं तु गीतं गायति वैव गीते वा रमत इति श्रुतेर्ह्यपरम् ॥४॥ क्षेमे नक्तं ग्रामान्तरं न गच्छेन्न च धावेत् ॥५॥ उदपानावेक्षणवृक्षारोहणफलप्रपतनसन्धिसर्पणविवृतस्नान[2] विषमलङ्घन [3]शुक्तवदनसन्ध्यादित्यप्रेक्षणभैक्षणानि न कुर्यात् न ह वै स्नात्वा भिक्षेतापह वै स्नात्वा भिक्षां जयतीति श्रुतेः ॥६॥ वर्षत्यप्रावृतो व्रजेत्—अयं मे वज्रः पाप्मानमपहनदिति ॥७॥ अप्स्वात्मानं नावेक्षेत ॥८॥ अजातलोम्नीं विपुंसीं षण्ढं[4] च नोपहसेत् ॥९॥

१. 'नियमान्' इति ग. कोशे ।
२. 'विवृतस्नान' इत्यनन्तरं 'विवृतशयन' इत्यधिकः पाठः घ. कोशे ।
३. 'शुष्कवदन' इति क. कोशे ।
४. 'विपुंषी ᳡' इति च. कोशे ।

गर्भिणीं विजन्येति ब्रूयात् ॥१०॥ सकुलमिति नकुलम् ॥११॥ भगालमिति कपालम् ॥१२॥ मणिधनुरितीन्द्रधनुः ॥१३॥ गां धयन्तीं परस्मै नाचक्षीत ॥१४॥ उर्वरायामनन्तर्हितायां भूमावुत्सर्पँस्तिष्ठन्न मूत्रपुरीषे कुर्यात् ॥१५॥ स्वयं प्रशीर्णेन काष्ठेन गुदं प्रमृजीत ॥१६॥ विकृतं वासो नाच्छादयीत॥१७॥ दृढव्रतो वधत्रः स्यात् सर्वत आत्मानं गोपायेत् सर्वेषां मित्रमिव[1] ॥१८॥ ॥९॥

—:o:—

# दशमी कण्डिका

तिस्रो रात्रीर्व्रतं चरेत् ॥१॥ अमाᳬसाऽयमृण्मयपायी ॥२॥ स्त्रीशूद्रशवकृष्णशकुनिशुनां चादर्शनमसम्भाषा[2] च तैः ॥३॥ शवशूद्रसूतकान्नानि च नाद्यात् ॥४॥ मूत्रपुरीषे ष्ठीवने चातपे न कुर्यात् सूर्याच्चात्मानं नान्तर्दधीत ॥५॥ तप्तेनोदकार्थान् कुर्वीत ॥६॥ अवज्योत्य रात्रौ भोजनम् ॥७॥ सत्यवदनमेव वा ॥८॥ दीक्षितोऽप्यातपादीनि कुर्यात् प्रवर्ग्यवाँश्चेत् ॥९॥ ॥१०॥

—:o:—

# एकादशी कण्डिका

अथातः पञ्च महायज्ञाः ॥१॥ वैश्वदेवादन्नात् पर्युक्ष्य स्वाहाकारैर्जुहुयाद् ब्रह्मणे प्रजापतये गृह्याभ्यः कश्यपायानुमतय इति ॥२॥ भूतगृह्येभ्यो मणिके त्रीन् पर्जन्यायाद्भ्यः पृथिव्यै

---

१. इतोऽग्रे छ. कोशे कोष्ठके (शुक्रियमध्येष्यमाणः) इत्यधिकः पाठः ।

२. '०मसम्भाषणं च तैः' ग. च. कोशयोः ।

॥३॥ धात्रे विधात्रे च द्वार्ययोः ॥४॥ प्रतिदिशं वायवे दिशां च ॥५॥ मध्ये त्रीन्ब्रह्मणेऽन्तरिक्षाय सूर्याय ॥६॥ विश्वेभ्यो देवेभ्यो विश्वेभ्यश्च भूतेभ्यस्तेषामुत्तरतः ॥७॥ उषसे भूतानां च पतये परम् ॥८॥ पितृभ्यः स्वधा नम इति दक्षिणतः ॥९॥ पात्रं निर्णिज्योत्तरापरस्यां दिशि निनयेद्—यक्ष्मै तत्त इति ॥१०॥ उद्धृत्याग्रं ब्राह्मणायावनेज्य दद्याद्धन्त त इति ॥११॥ यथार्हं भिक्षुकानतिथींश्च सम्भजेरन् ॥१२॥ बालज्येष्ठा गृह्या यथार्हमश्नीयुः ॥१३॥ पश्चाद् गृहपतिः पत्नी च ॥१४॥ पूर्वो वा गृहपतिः । तस्मादु स्वादिष्टं गृहपतिः पूर्वोऽतिथिभ्योऽश्नीयादिति[1] श्रुतेः ॥१५॥ अहरहः स्वाहा कुर्यादन्नाभावे केनचिदा काष्ठाद् देवेभ्यः पितृभ्यो मनुष्येभ्यश्चोदपात्रात् ॥१६॥ ॥११॥

—:०:—

# द्वादशी कण्डिका

[2]अथातो धर्मजिज्ञासा ॥१॥ केशान्तादूर्ध्वमपत्नीक उत्सन्नाग्निरनग्निको वा प्रवासी ब्रह्मचारी वान्वग्निरिति ग्रामाग्निमाहृत्य पृष्ठो दिवीत्यधिष्ठाप्य त्रिभिश्च सावित्रैः प्रज्वाल्य

---

१. इयं श्रुतिर्नोपलब्धाऽस्माभिः । व्याख्याकाराश्चेह 'यत्स्वादुइष्टं च तदन्नं गृहपतिः पत्न्याः पूर्वः अतिथिभ्य आशितेभ्यः' इत्येवं क्लेशेन व्याचख्युः । वस्तुतोऽत्र 'पूर्वोऽतिथिभ्यो नाश्नीयात्' इति पाठो युक्ततरः स्यात् । अथर्ववेदस्य नवमकाण्डे षष्ठ सूक्तस्य तृतीते पर्याये 'यः पूर्वोऽतिथेरश्नाति' तस्य गृहस्थस्य गृहाणां सर्वविधवस्तूनामशनमुक्तम् । तत्रैव च सप्तममन्त्रे अतिथिपदेन श्रोत्रियो ग्राह्य इत्युक्तम् । नवम मन्त्रे च 'यदधिगवं क्षीरादि स्वादीयस्तदेव नाश्नीयात्' इत्युक्त्वा विशिष्टायामवस्थायामतिथेः प्रागशनमपि विहितम् ।

२. इयं कण्डिका ग. घ. कोशयोर्न पठ्यते ।

ताꣳ सवितुस्तत्सवितुर्विश्वानि देव सवितरिति पूर्ववदक्षतैर्हुत्वा ॥२॥ पाकं चेत्तत्र वैश्वदेवं ब्रह्मणे प्रजापतये गृह्याभ्यः कश्यपायानुमतये विश्वेभ्यो देवेभ्योऽग्नये स्विष्टकृत इति ॥३॥ उपस्पृश्य पूर्ववद् बलिकर्म एवं कृते न वृथापाको भवति ॥४॥ वृथापाकं पचेन्न वृथापाकमश्नीयाद् ॥५॥ अत्र पिण्डपितृयज्ञः पश्चादाग्रयणानि कुर्यात् ॥६॥ ॥१२॥

—:०:—

# त्रयोदशी कण्डिका

अथातोऽध्यायोपाकर्म ॥१॥ ओषधीनां प्रादुर्भावे श्रवणेन श्रावण्यां पौर्णमास्याꣳ श्रावणस्य पञ्चमीꣳ हस्तेन वा ॥२॥ आज्यभागाविष्ट्वाऽऽज्याहुतीर्जुहोति ॥३॥ पृथिव्या अग्नय इत्यृग्वेदे ॥४॥ अन्तरिक्षाय वायव इति यजुर्वेदे ॥५॥ दिवे सूर्यायेति सामवेदे ॥६॥ दिग्भ्यश्चन्द्रमस इत्यथर्ववेदे ॥७॥ ब्रह्मणे छन्दोभ्यश्चेति सर्वत्र ॥८॥ प्रजापतये देवेभ्य ऋषिभ्यः श्रद्धायै मेधायै सदसस्पतयेऽनुमतय इति च ॥९॥ एतदेव व्रतादेशनविसर्गेषु ॥१०॥ सदसस्पतिमित्यक्षतधानास्त्रिः॥११॥ सर्वेऽनुपठेयुः ॥१२॥ हुत्वाहुत्वौदुम्बर्यस्तिस्रस्तिस्रः[1] समिध आदध्युरार्द्रा सपलाशा घृताक्ताः सावित्र्या ॥१३॥ ब्रह्मचारिणश्च पूर्वकल्पेन ॥१४॥ शन्नो भवन्त्वित्यक्षतधाना अखादन्तः[2] प्राश्नीयुः ॥१५॥ दधिक्राव्णः इति दधि भक्षयेयुः ॥१६॥ स यावन्तं गणमिच्छेत्तावतस्तिलानाकर्षफलकेन जुहुयात् सावित्र्या

---

१. 'औदुम्बरीस्तिस्रः' इति हरिहरजयरामौ पठतः ।

१. अखादन्तः=दन्तैरनवखण्डयन्तः=अचर्वयन्तः । 'अस्वादयन्तः' इति घ. कोशे ।

शुक्रज्योतिरित्यनुवाकेन वा ॥१७॥ प्राशनान्ते प्रत्यङ् मुखेभ्य उपविष्टेभ्य ऊँकारमुक्त्वा त्रिश्च सावित्रीमध्यायादीन्प्रब्रूयात् ॥१८॥ ऋषिमुखानि बह्वृचानाम् ॥१९॥ पर्वाणि छन्दोगानाम् ॥२०॥ सूक्तान्यथर्वणानाम् ॥२१॥ सर्वे जपन्ति सह नोऽस्तु सह नोऽवतु सह न इदं वीर्यवदस्तु ब्रह्म। इन्द्रस्तद्वेद येन यथा न विद्विषामह इति ॥२२॥ त्रिरात्रं नाधीयीरन् ॥२३॥ [1]लोमनखानामनिकृन्तनम् ॥२४॥ एके प्रागुत्सर्गात् ॥२५॥ ॥१३॥

—:o:—

# चतुर्दशी कण्डिका

वातेऽमावास्यायाᳩं[2] सर्वानध्यायः ॥१॥ श्राद्धाशने चोल्कावस्फूर्जद्भूमिचलनाग्न्युत्पातेष्वृतुसन्धिषु[3] चाकालम् ॥२॥ उत्सृष्टेष्वभ्रदर्शने सर्वरूपे च त्रिरात्रं त्रिसन्ध्यं वा ॥३॥ भुक्त्वाऽऽर्द्रपाणिरुद्रके निशायाᳩं सन्धिवेलयोरन्तःशवे ग्रामेऽन्तर्दिवाकीर्त्ये[4] ॥४॥ धावतोऽभिशस्तपतितदर्शनाश्चर्याभ्युदयेषु च तत्कालम् ॥५॥ नीहारे वादित्रशब्द आर्तस्वने ग्रामान्ते श्मशाने श्वगर्दभोलूकशृगालसामशब्देषु शिष्टाचरिते च तत्कालम् ॥६॥ गुरौ प्रेतेऽपोऽभ्यवेयाद् दशरात्रं चोपरमेद् ॥७॥ सतानूनप्त्रिणि सब्रह्मचारिणि च त्रिरात्रम् ॥८॥ एकरात्रमसब्रह्मचारिणि ॥९॥ अर्द्धषष्ठान्मासानधीत्योत्सृजेयुः

---

१. 'जटालोम०' इति घ. कोशे।

२. '०मावास्यायामिति' इति ग. कोशे।

३. '०त्पात ऋतुसन्धिषु' इत्यपि पाठ इति छ. कोशे टिप्पणी।

४. 'दिवाकीर्तिः' इति ग. कोशे. कर्कभाष्ये च।

॥१०॥ अर्द्धसप्तमान्वा ॥११॥ अथेमामृचं जपन्ति—उभा कवी युवा यो नो धर्मः परापतत्[1] । परिसख्यस्य धर्मिणो विसख्यानि विसृजामह इति ॥१२॥ त्रिरात्रꣳसहोष्य विप्रतिष्ठेरन् ॥१३॥ ॥१४॥

—:०:—

## पञ्चदशी कण्डिका

पौषस्य रोहिणां मध्यमायां वाऽष्टकायामध्यायानुत्सृजेरन् ॥१॥ उदकान्तं गत्वाऽद्भिर्देवाँश्छन्दाꣳसि वेदानृषीन् पुराणाचार्यान् गन्धर्वानितराचार्यान् संवत्सरं च सावयवं पितृनाचार्यान् स्वांश्च तर्पयेयुः ॥२॥ सावित्रीं चतुरनुद्रुत्य विरताः स्म इति प्रब्रूयुः ॥३॥ क्षपणं प्रवचनं च पूर्ववत् ॥४॥ ॥१५॥

—:०:—

## षोडशी कण्डिका

पुण्याहे लाङ्गलयोजनम् । ज्येष्ठया वेन्द्रदैवत्यम् ॥१॥ इन्द्रं पर्जन्यमश्विनौ मरुत उदलाकाश्यपꣳ स्वातिकारीꣳ सीतामनुमतिं च दध्ना तण्डुलैर्गन्धैरक्षतैरिष्ट्वाऽनडुहो मधुघृते प्राशयेत् ॥२॥ सीरा युञ्जन्तीति योजयेत् ॥३॥ शुनꣳ सुफाला इति कृषेत् फालं वा लभेत ॥४॥ न वाऽन्युपदेशाद् वपनानुषङ्गाच्च ॥५॥ अग्र्यमभिषिच्याऽकृष्टं तदा कृषेयुः ॥६॥ स्थालीपाकस्य पूर्ववद् देवता यजेद् उभयोर्व्रीहियवयोः प्रवपन् सीतायज्ञं च ॥७॥ ततो ब्राह्मणभोजनम् ॥८॥ ॥१६॥

—:०:—

---

१. 'परायन्' इति ग. कोशे ।

# सप्तदशी कण्डिका

अथातः श्रवणाकर्म ॥१॥ श्रावण्यां पौर्णमास्याम् ॥२॥ स्थालीपाकꣳ श्रपयित्वाऽक्षतधानाश्चैककपालं[1] पुरोडाशं धानानां भूयसीः पिष्ट्वाऽऽज्यभागाविष्ट्वाऽऽज्याहुती जुहोति ॥३॥ अप श्वेतपदा जहि पूर्वेण चापरेण च। सप्त च वारुणी-रिमाः प्रजाः सर्वाश्च राजबान्धवैः स्वाहा ॥४॥ न वै श्वेतस्याध्याचारेऽहिर्ददर्श कंचन। श्वेताय वै दर्व्याय[2] नमः स्वाहेति ॥५॥ स्थालीपाकस्य जुहोति—विष्णवे श्रवणाय श्रावण्यै पौर्णमास्यै वर्षाभ्यश्चेति ॥६॥ धानावन्तमिति धानानाम् ॥७॥ घृताक्तान् सक्तून् सर्पेभ्यो जुहोति ॥८॥ आग्नेय-पाण्डुपार्थिवानाꣳ सर्पाणामधिपतये स्वाहा श्वेतवायवान्तरि-क्षाणाꣳ सर्पाणामधिपतये स्वाहाऽभिभू सौर्यदिव्यानाꣳ सर्पाणामधिपतये स्वाहेति ॥९॥ सर्वहुतमेककपालं ध्रुवाय भौमाय स्वाहेति ॥१०॥ प्राशनान्ते सक्तूनामेकदेशꣳ शूर्पे न्युप्योपनिष्क्रम्य बहिःशालायाः स्थण्डिलमुपलिप्योल्कायां [3]ध्रियमाणायां माऽन्तरागमतेत्युक्त्वा वाग्यतः सर्पानवनेजयति ॥११॥ आग्नेयपाण्डुपार्थिवानाꣳ सर्पाणामधिपतेऽवनेनिक्ष्व श्वेतवायवान्तरिक्षाणाꣳ सर्पाणामधिपतेऽवनेनिक्ष्वाभिभूःसौर्य दिव्यानाꣳ सर्पाणामधिपतेऽवनेनिक्ष्वेति ॥१२॥ यथा ऽवनिक्तं दर्व्योपघातꣳ सक्तून् सर्पेभ्यो बलिꣳ हरति ॥१३॥ आग्नेयपाण्डुपार्थिवानाꣳ सर्पाणामधिपत एष ते बलिः श्वेत-वायवान्तरिक्षाणाꣳ सर्पाणामधिपत एष ते बलिरभिभू सौर्य-दिव्यानाꣳ सर्पाणामधिपत एष ते बलिरिति ॥१४॥ अवनेज्य

---

१. '०चैककपालं च पुरोडाशं' इति घ. कोशे।

२. केषांचिन्मते 'वैदर्व्याय' इत्येकं पदम्। ३. 'ध्रीयमाणायां' इति घ. कोशे।

पूर्ववत् कङ्कतैः प्रलिखति ॥१५॥ आग्नेयपाण्डुपार्थिवानाꣳ सर्पाणामधिपते प्रलिखस्व श्वेतवायवान्तरिक्षाणाꣳ सर्पाणामधिपते प्रलिखस्वाभिभूःसौर्यदिव्यानाꣳ सर्पाणामधिपते प्रलिखस्वेति ॥१६॥ अञ्जनानुलेपनꣳ स्रजश्चाञ्जस्वानुलिम्पस्व स्रजोऽपि नह्यस्वेति ॥१७॥ सक्तुशेषꣳ स्थण्डिले न्युप्योदपात्रेणोपनिनीयोपतिष्ठते—नमोऽस्तु सर्पेभ्य इति तिसृभिः ॥१८॥ स यावत् कामयेत न सर्पा अभ्युपेयुरिति तावत् सन्ततयोदधारया निवेशनं त्रिः परिषिञ्चन् परीयाद्—अपश्वेतपदा जहीति द्वाभ्याम् ॥१९॥ दर्वीशूर्पं प्रक्षाल्य प्रतप्य प्रयच्छति ॥२०॥ द्वारदेशे मार्जयन्त आपो हि ष्ठेति तिसृभिः ॥२१॥ अनुगुप्तमेतꣳ सक्तुशेषं निधाय ततोऽस्तमितेऽस्तमितेऽग्निं परिचर्य दर्व्योपघातꣳ सक्तून् सर्पेभ्यो बलिꣳ हरेदाग्रहायण्याः ॥२२॥ तꣳ हरन्तं नान्तरेण गच्छेयुः ॥२३॥ दर्व्याऽऽचमनं प्रक्षाल्य निदधाति ॥२४॥ धानाः प्राश्नन्त्यसꣳस्यूताः ॥२५॥ ततो ब्राह्मणभोजनम् ॥२६॥ ॥१७॥

—:o:—

# अष्टादशी कण्डिका

प्रौष्ठपद्यामिन्द्रयज्ञः ॥१॥ पायसमैन्द्रꣳ श्रपयित्वाऽपूपांश्चापूपैः स्तीर्त्वाऽऽज्यभागाविष्ट्वाऽऽज्याहुतीर्जुहोति—इन्द्रायेन्द्राण्या अजायैकपदे[1] ऽहिर्बुध्न्याय प्रौष्ठपदाभ्यश्चेति ॥२॥ प्राशनान्ते मरुद्भ्यो बलिꣳ हरति—अहुतादो मरुत इति श्रुतेः॥३॥ आश्वत्थेषु पलाशेषु मरुतोऽश्वत्थे तस्थुरिति वचनात्

---

१. 'अजैकपदे' इति ग. कोशे ।

॥४॥ शुक्रज्योतिरिति प्रतिमन्त्रम् ॥५॥ विमुखेन[1] च मनसा ॥६॥ नामान्येषामेतानीति श्रुतेः ॥७॥ इन्द्रं दैवीरिति जपति ॥८॥ ततो ब्राह्मणभोजनम् ॥९॥ ॥१८॥

—:o:—

# एकोनविंशी कण्डिका

आश्वयुज्यां पृषातकाः ।१॥ पायसमैन्द्रꣳ श्रपयित्वा दधिमधुघृतमिश्रं जुहोति—इन्द्रायेन्द्राण्या अश्विभ्यामाश्वयुज्यै पौर्णमास्यै शरदे चेति ॥२॥ प्राशनान्ते दधिपृषातकमञ्जलिना जुहोति—ऊनं मे पूर्यतां पूर्णं मे मा व्यगात् स्वाहेति ॥३॥ दधिमधुघृतमिश्रममात्या अवेक्षन्ते—आयात्विन्द्र इत्यनुवाकेन ॥४॥ मातृभिर्वत्सान् सꣳसृज्य ताꣳ रात्रिमाग्रहायणीं च ॥५॥ ततो ब्राह्मणभोजनम् ॥६॥ ॥१९॥

—:o:—

# विंशी कण्डिका

अथ सीतायज्ञः ॥१॥ व्रीहियवानां यत्र यत्र यजेत तन्मयꣳ स्थालीपाकꣳ श्रपयेत् ॥२॥ कामादीजानोऽन्यत्रापि व्रीहियवयोरेवान्यतरꣳ स्थालीपाकꣳ श्रपयेत् ॥३॥ न पूर्वचोदितत्वात् सन्देहः ॥४॥ असम्भवाद्विनिवृत्तिः ॥५॥ क्षेत्रस्य पुरस्तादुत्तरतो वा शुचौ देशे कृष्टे फलानुपरोधेन ।६॥ ग्रामे वोभयसम्प्रयोगादविरोधात् ॥७॥ यत्र श्रपयिष्यन्नुपलिप्त उद्धतावोक्षिते

1. 'मुखव्यापाररहितेन मनसा' इति विश्वनाथः ।

ऽग्निमुपसमाधाय तन्मिश्रैर्दर्भैः स्तीर्त्वाऽऽज्यभागाविष्ट्वाऽऽज्याहुतीर्जुहोति ॥८॥ पृथिवी द्यौः प्रदिशो दिशो यस्मै द्युभिरावृत्ताः। तमिहेन्द्रमुपह्वये शिवा न सन्तु हेतयः स्वाहा। यन्मे किञ्चिदुपेप्सितमस्मिन् कर्मणि वृत्रहन्। तन्मे सर्वꣳसमृध्यतां जीवतः शरदः शतꣳ स्वाहा। सम्पत्तिर्भूतिभूमिर्वृष्टिर्ज्यैष्ठ्यꣳ श्रैष्ठ्यꣳ श्रीः प्रजामिहावतु स्वाहा[1]। यस्या भावे वैदिकलौकिकानां भूतिर्भवति कर्मणाम्। इन्द्रपत्नीमुपह्वये सीताꣳ सा मे त्वनपायिनी भूयात् कर्मणि कर्मणि[2] स्वाहा॥ अश्वावती गोमती सूनृतावती बिभर्ति या प्राणभृतो अतन्द्रिता। खलमालिनीमुर्वरामस्मिन् कर्मण्युपह्वये ध्रुवाꣳ सा त्वनपायिनी भूयात् स्वाहेति ॥९॥ स्थालीपाकस्य जुहोति—सीतायै यजायै शमायै भूत्या इति ॥१०॥ मन्त्रवत्प्रदानमेकेषाम् ॥११॥ स्वाहाकारप्रदाना इति श्रुतेर्विनिवृत्तिः ॥१२॥ स्तरणशेषकुशेषु सीतागोप्तृभ्यो बलिꣳ हरति—पुरस्ताद्ये त आसते सुधन्वानो निषङ्गिणः। ते त्वा पुरस्ताद् गोपायन्त्वप्रमत्ता अनपायिनो नम एषां करोम्यहं बलिमेभ्यो हरामीममिति ॥१३॥ अथ दक्षिणतः—अनिमिषा वर्मिण आसते। ते त्वा दक्षिणतो गोपायन्त्वप्रमत्ता अनपायिनो नम एषां करोम्यहं बलिमेभ्यो हरामीममिति ॥१४॥ अथ पश्चात्—आभुवः प्रभुवो भूतिर्भूमिः पार्ष्णिः शुनङ्कुरिः। ते त्वा पश्चाद् गोपायन्त्वप्रमत्ता अनपायिनो नम एषां करोम्यहं बलिमेभ्यो हरामीममिति ॥१५॥ अथोत्तरतेः—भीमा वायु समा जवे। ते त्वोत्तरतः क्षेत्रे खले गृहेऽध्वनि गोपायन्त्वप्रमत्ता अनपायिनो

---

१. 'सम्पत्तिर्भू…स्वाहा' नास्ति ग. कोशे।

२. 'कर्मणि' नास्ति ग. कोशे।

नम एषां करोम्यहं बलिमेभ्यो हरामीममिति॥१६॥ प्रकृतादन्य-स्मादाज्यशेषेण च पूर्ववद् बलिकर्म ॥१७॥ स्त्रियश्चोपय-जेरन्नाचरितत्व ॥१८॥ सꣳस्थिते कर्मणि ब्राह्मणान् भोजयेत् सꣳस्थिते कर्मणि ब्राह्मणान्भोजयेत् ॥१९॥ ॥२०॥

इति श्रीमत्कात्यायन-विरचिते गृह्यसूत्र

द्वितीयं काण्डं समाप्तम्[1]

—:०:—

१. 'इति कात्यायनगृह्यसूत्रे द्वितीयकाण्डः समाप्तः' इति ग. कोशे। 'इति कात्यायनकृते गृहे द्वितीयकाण्डं समाप्तम्' इति घ. कोशे।

# अथ तृतीयं काण्डम्

## प्रथमा कण्डिका

अनाहिताग्नेर्नवप्राशनम् ॥१॥ नवँ स्थालीपाकँ श्रपयित्वाऽऽज्यभागाविष्ट्वाऽऽज्याहुती जुहोति—शतायुधाय शतवीर्याय शतोतये अभिमातिषाहे। शतं यो नः शरदोऽजीजानिन्द्रो नेषदति दुरितानि विश्वा स्वाहा। ये चत्वारः पथयो देवयाना अन्तरा द्यावापृथिवी वियन्ति। तेषां योऽऽज्यानिमजीजिमावहात् तस्मै नो देवाः परिधत्तेह सर्वे स्वाहेति ॥२॥ स्थालीपाकस्याग्रयणदेवताभ्यो हुत्वा जुहोति स्विष्टकृते च—स्विष्टमग्ने अभि तत् पृणीहि विश्वाँश्च देवः पृताना अविष्यत्[1]। सुगं नु पन्थां प्रदिशन्न एहि ज्योतिष्मद्धेह्यजरन्न आयुः स्वाहेति ॥३॥ अथ प्राश्नाति—अग्निः प्रथमः प्राश्नातु स हि वेद यथा हविः। शिवा अस्मभ्यमोषधीः कृणोतु विश्वचर्षणिः। भद्रान्नः श्रेयः समनैष्ट देवास्त्वयाऽवशेन समशीमहि त्वा। स नो मयोऽभूः पितो आविशस्व शन्तोकाय तनुवे स्योन इति ॥४॥ अन्नपतीयया वा ॥५॥ अथ यवानाम्—एतमुत्यं मधुना संयुतम्। यवँ सरस्वत्या अधिवनाय चक्रृषुः। इन्द्र आसीत् सीरपतिः शतक्रतुः कीनाशा आसन्मरुतः सुदानव इति ॥६॥ ततो ब्राह्मणभोजनम् ॥७॥ ॥१॥

—:०:—

---

१. 'विश्वांश्च देवाः पृतनाऽअविष्यन्' इति ग. कोशे।

# द्वितीया कण्डिका

मार्गशीर्ष्यां पौर्णमास्यामाग्रहायणीकर्म ॥१॥ स्थालीपाकꣳ श्रपयित्वा श्रवणावदाज्याहुती हुत्वाऽपरा जुहोति। यां जनाः प्रतिनन्दन्ति रात्रीन्धेनुमिवायतीम्। संवत्सरस्य या पत्नी सा नो अस्तु सुमङ्गली स्वाहा। संवत्सरस्य प्रतिमा या ताꣳ रात्रीमुपास्महे। प्रजाꣳ सुवीर्यां कृत्वा दीर्घमायुर्व्यश्नवै स्वाहा। संवत्सराय परिवत्सरायेदावत्सरायेद्वत्सराय वत्सराय कृणुते बृहन्नमः। तेषां वयꣳ सुमतौ यज्ञियानां ज्योग्जीता अहताः स्याम स्वाहा। ग्रीष्मो हेमन्त उत नो वसन्तः शिवा वर्षा अभया शरन्नः। तेषामृतूनाꣳ शतशारदानां[1] निवात एषामभये वसेम स्वाहेति ॥२॥ स्थालीपाकस्य जुहोति। सोमाय मृगशिरसे मार्गशीर्ष्यै पौर्णमास्यै हेमन्ताय चेति ॥३॥ प्राशनान्ते सक्तुशेषꣳ शूर्पे न्युप्योपनिष्क्रमणप्रभृत्यामार्जनात् ॥४॥ मार्जनान्त उत्सृष्टो बलिरित्याह ॥५॥ पश्चादग्नेः स्रस्तरमास्तीर्याऽहतं च वास आप्लुता अहतवाससः प्रत्यवरोहन्ति दक्षिणतः[2] स्वामी जायोत्तरा यथाकनिष्ठमुत्तरतः ॥६॥ दक्षिणतो ब्रह्माणमुपवेश्योत्तरत उदपात्रꣳ शमीशाखासीतालोष्ठाश्मनो निधायाग्निमीक्षमाणो जपति। अयमग्निर्वीरतमोऽयं भगवत्तमः सहस्रसातमः। सुवीर्योऽयꣳश्रैष्ठ्ये दधातु नाविति ॥७॥ पश्चादग्नेः प्राञ्चमञ्जलिं करोति ॥८॥ दैवीं नावमिति तिसृभिः स्रस्तरमारोहन्ति ॥९॥ ब्रह्माणमामन्त्रयते ब्रह्मन्प्रत्यवरोहामेति ॥१०॥ ब्रह्मानुज्ञाताः प्रत्यवरोहन्ति आयु-

---

१. 'तेषमृतूनां शत शारदानां' इति नास्ति ग. कोशे।

२. 'स्रस्तरमास्तीर्याऽहतं च वास आप्लुता अहतवाससः प्रत्यवरोहन्ति' इति नास्ति ग. कोशे।

ष्कीर्तिर्यशो बलमन्नाद्यं प्रजामिति ॥११॥ उपेता जपन्ति। सुहेमन्तः सुवसन्तः सुग्रीष्मः प्रतिधीयतान्नः। शिवा नो वर्षाः सन्तु शरदः सन्तु नः शिवा इति ॥१२॥ स्योना पृथिवी नो भवेति दक्षिणपार्श्वैः प्राक्शिरसः संविशन्ति ॥१३॥ उपोत्तिष्ठन्ति उदायुषा स्वायुषोत्पर्जन्यस्य वृष्ट्या पृथिव्याः सप्तधामभिरिति ॥१४॥ एवं द्विरपरं ब्रह्मानुज्ञाताः ॥१५॥ अधः शयीरंश्चतुरो मासान्यथेष्टं वा ॥१६॥ ॥२॥

—:०:—

# तृतीया कण्डिका

ऊर्ध्वमाग्रहायण्यास्तिस्रोऽष्टकाः ॥१॥ ऐन्द्री वैश्वदेवी प्राजापत्या पित्र्येति ॥२॥ अपूपमाꣳसशाकैर्यथासंख्यम् ॥३॥ प्रथमाऽष्टका पक्षाष्टम्याम् ॥४॥ स्थालीपाकꣳ श्रपयित्वाऽऽज्यभागाविष्ट्वाऽऽज्याहुतीर्जुहोति—त्रिꣳशत्स्वसार उपयन्ति निष्कृतꣳ समानं केतुं प्रतिमुञ्चमानाः। ऋतूँस्तन्वते कवयः प्रजानतीर्मध्ये छन्दसः परियन्ति भास्वतीः स्वाहा। ज्योतिष्मती प्रतिमुञ्चते नभो रात्री देवी सूर्यस्य व्रतानि। विपश्यन्ति पशवो जायमाना नानारूपा मातुरस्या उपस्थे स्वाहा। एकाऽष्टका तपसा तप्यमाना जजान गर्भं महिमानमिन्द्रम्। तेन दस्यून् व्यसहन्त देवा हन्ताऽसुराणामभवच्छचीभिः स्वाहा। अनानुजामनुजां मामकर्त्त सत्यं वदन्त्यन्विच्छ एतत्। भूयासमस्य सुमतौ यथा यूयमन्या वो अन्यामति मा प्रयुक्त स्वाहा। अभून्मम सुमतौ विश्ववेदा आष्ट प्रतिष्ठामविदद्धि गाधम्। भूयासमस्य सुमतौ[1] यथा यूयमन्या वो अन्या-

१. 'विश्ववेदा आष्ट प्रतिष्ठामविदद्धि गाधम्। भूयासमस्य सुमतौ' इति नास्ति ग. कोशे। उभयत्र 'सुमतौ' पदस्य प्रयोगात् दृष्टिदोषात् परित्यक्तः पाठः।

मति मा प्रयुक्त स्वाहा। पञ्च व्युष्टीरनु पञ्चदोहा गां पञ्चनाम्नीमृतवोऽनु पञ्च। पञ्च दिशः पञ्चदशेन क्लृप्ताः समानमूर्ध्नीरधिलोकमेकꣳ स्वाहा। ऋतस्य गर्भः प्रथमा व्यूषिष्यपामेका महिमानं बिभर्त्ति। सूर्यस्यैका चरति निष्कृतेषु घर्मस्यैका सवितैकां नियच्छतु स्वाहा॥ या प्रथमा व्यौच्छत् सा धेनुरभवद्यमे। सा नः पयस्वती धुक्ष्वोत्तरामुत्तराꣳ समाꣳ स्वाहा॥ शुक्रऋषभा नभसा ज्योतिषाऽगाद्विश्वरूपा शबली अग्निकेतुः। समानमर्थꣳ स्वपस्यमाना बिभ्रती जरामजर उष आगाः स्वाहा॥ ऋतूनां पत्नी प्रथमेयमागादह्नां नेत्री जनित्री प्रजानाम्। एका सती बहुधोषो व्यौच्छत् साऽजीर्णा त्वं जरयसि[1] सर्वमन्यत् स्वाहेति॥५॥ स्थालीपाकस्य जुहोति शान्ता पृथिवी शिवमन्तरिक्षꣳ शं नो द्यौरभयं कृणोतु। शं नो दिशः प्रदिश आदिशो नोऽहोरात्रे कृणुतं दीर्घमायुर्व्यश्नवै स्वाहा। आपो मरीचीः परिपान्तु सर्वतो धाता समुद्रो अपहन्तु पापम्। भूतं भविष्यदकृन्तद्विश्वमस्तु मे ब्रह्माभिगुप्तः सुरक्षितः स्याꣳ स्वाहा॥ विश्वे आदित्या वसवश्च देवा रुद्रा गोप्तारो मरुतश्च सन्तु। ऊर्जं प्रजाममृतं दीर्घमायुः प्रजापतिर्मयि परमेष्ठी दधातु नः स्वाहेति॥६॥ अष्टकायै स्वाहेति॥७॥ मध्यमा गवा॥८॥ तस्यै वपां जुहोति—वह वपां जातवेदः पितृभ्य इति॥९॥ श्वोऽन्वष्टकासु सर्वासां पार्श्वसक्थिसव्याभ्यां परिवृते पिण्डपितृयज्ञवत्॥१०॥ स्त्रीभ्यश्चोपसेचनं च कर्षूषु सुरया तर्पणेन चाञ्जनानुलेपनꣳ स्रजश्च॥११॥ आचार्यायान्तेवासिभ्यश्चानपत्येभ्य इच्छन्॥१२॥ मध्या वर्षे च तुरीया शाकाष्टका॥१३॥॥३॥

---

१. 'जरयति' इति ग. कोशेऽपपाठः।

# चतुर्थी कण्डिका

अथातः शालाकर्म ॥१॥ पुण्याहे शालां कारयेत् ॥२॥ तस्या अवटमभिजुहोति—च्युताय भौमाय स्वाहेति ॥३॥ स्तम्भमुच्छ्रयति—इमामुच्छ्रयामि भुवनस्य नाभिं वसोर्धारां प्रतरणीं वसूनाम् । इहैव ध्रुवान्निमिनोमि शालां क्षेमे तिष्ठतु घृतमुक्षमाणा । अश्वावती गोमती सूनृतावत्युच्छ्रयस्व महते सौभगाय । आ त्वा शिशुराक्रन्दत्वा गावो धेनवो वाश्यमानाः। आ त्वा कुमारस्तरुण आ वत्सो जगदैः सह । आ त्वा परिस्रुतः कुम्भ आ दध्नः कलशैरुप क्षेमस्य पत्नी बृहती[1] सुवासा रयिन्नो धेहि सुभगे सुवीर्यम् । अश्वावद् गोमदूर्जस्वत् पर्णं वनस्पतेरिव । अभि नः पूर्य्यताᳬ रयिरिदमनुश्रेयो वसान इति चतुरः प्रपद्यते ॥४॥ अभ्यन्तरतोऽग्निमुपसमाधाय दक्षिणतो ब्रह्माणमुपवेश्योत्तरत उदपात्रं प्रतिष्ठाप्य स्थालीपाकᳬश्रपयित्वा निष्क्रम्य द्वारसमीपे स्थित्वा ब्रह्माणमामन्त्रयते—ब्रह्मन् प्रविशामीति ॥५॥ ब्रह्मानुज्ञातः प्रविशति—ऋत्तं[2] प्रपद्ये शिवं प्रपद्य इति ॥६॥ आज्यᳬ संस्कृत्येह रतिरित्याज्याहुती हुत्वाऽपरा जुहोति—वास्तोष्पते प्रतिजानीह्यस्मान् स्वावेशो अनमीवो भवा नः । यत्त्वेमहे प्रति तन्नो जुषस्व शन्नो भव द्विपदे शं चतुष्पदे स्वाहा । वास्तोष्पते[3] प्रतरणो न एधि गयस्फानो गोभिरश्वेभिरिन्दो । अजरासस्ते सख्ये स्याम पितेव पुत्रान् प्रति तन्नो जुषस्व शन्नो भव द्विपदे शं चतुष्पदे स्वाहा । वास्तोष्पते शग्मया सᳬसदा ते सक्षीमहि रण्वया गातुमत्या । पाहि

---

१. 'बृहस्पती' इति ग. कोशे ।

२. 'ऋतं' इति छ. कोशे, जयरामकृतायां पारस्करव्याख्यायां च पाठः ।

३. 'इन्द्रो । वास्तोषते' इति छ. कोशेऽपपाठः ।

क्षेम उत योगे वरन्नो यूयं पात स्वस्तिभिः सदा नः स्वाहा । अमीवहा वास्तोष्पते विश्वा रूपाण्याविशन् । सखा सुशेव एधि नः स्वाहेति ॥७॥ स्थालीपाकस्य जुहोति—अग्निमिन्द्रं बृहस्पतिं विश्वान् देवानुपह्वये सरस्वतीं च वाजीं च वास्तु मे दत्त वाजिनः स्वाहा ॥ सर्पदेवजनान् सर्वान् हिमवन्तꣳ सुदर्शनम्[1] वसूंश्च रुद्रानादित्यानीशानं जगदैः सह । एतान्त्सर्वान् प्रपद्येऽहं वास्तु मे दत्त वाजिनः स्वाहा। पूर्वाह्णमपराह्णं चोभौ मध्यन्दिना सह । प्रदोषमर्द्धरात्रं च व्युष्टां देवीं महापथाम् । एतान्त्सर्वान् प्रपद्येऽहं वास्तु मे दत्त वाजिनः स्वाहा ॥ कर्तारं च विकर्त्तारं विश्वकर्माणमोषधींश्च वनस्पतीन् । एतान्त्सर्वान् प्रपद्येऽहं वास्तु मे दत्त वाजिनः स्वाहा[2] ॥ धातारं च विधातारं निधीनां च पतिꣳ सह । एतान्त्सर्वान् प्रपद्येऽहं वास्तु मे दत्त वाजिनः स्वाहा ॥ स्योनꣳ शिवमिदं वास्तु दत्तं ब्रह्मप्रजापती । सर्वाश्च देवताः स्वाहेति ॥८॥ प्राशनान्ते काꣳस्ये सम्भारानोप्यौदुम्बरपलाशानि ससुराणि शाद्वलं गोमयं दधि मधु घृतं कुशान् यवांश्चासनोपस्थानेषु प्रोक्षेत् ॥९॥ पूर्वे सन्धावभिमृशति—श्रीश्च त्वा यशश्च पूर्वे सन्धौ गोपायेतामिति॥१०॥ दक्षिणे सन्धावभिमृशति—यज्ञश्च त्वा दक्षिणा च दक्षिणे सन्धौ गोपायेतामिति ॥११॥ पश्चिमे सन्धावभिमृशति—अन्नं च त्वा ब्राह्मणाश्च[3] पश्चिमे सन्धौ गोपायेतामिति॥१२॥ उत्तरे सन्धवभिमृशति—ऊर्क् च त्वा सूनृता चोत्तरे सन्धौ गोपायेतामिति[4] ॥१३॥ निष्क्रम्य दिश उपतिष्ठते—केता च

---

१. 'नगेश्वरम्' इति छ. कोशे टिप्पण्यां पाठान्तरम् ।

२. 'कर्तारं च···वाजिनः स्वाहा' इति मन्त्रोस्त्रुटितो म. कोशे ।

३. 'ब्राह्मणश्च' इति छ. कोशे टिप्पण्यां पाठान्तरम् ।

४. 'सन्धावमि······गोपायेतामिति' त्रुटितः पाठो ग. कोशे ।

मा सुकेता च पुरस्ताद् गोपयेतामित्यग्निर्वै केताऽऽदित्यः सुकेता तौ प्रपद्ये ताभ्यां नमोऽस्तु तौ मा पुरस्ताद् गोपायेतामिति॥१४॥ अथ दक्षिणतो गोपायमानं च मा रक्षमाणा च दक्षिणतो गोपायेतामित्यहर्वै गोपायमानꣳ रात्री रक्षमाणा ते प्रपद्ये ताभ्यां नमोऽस्तु ते मा दक्षिणतो गोपायेतामिति ॥१५॥ अथ पश्चात्—दीदिविश्च मा जागृविश्च पश्चाद् गोपायेतामित्यन्नं वै दीदिविः प्राणो जागृविस्तौ प्रपद्ये ताभ्यान्नमोऽस्तु तौ मा पश्चाद् गोपायेतामिति ॥१६॥ अथोत्तरतः—अस्वप्नश्च माऽनवद्राणश्चोत्तरतो गोपायेतामिति चन्द्रमा वा अस्वप्नो वायुरनवद्राणस्तौ प्रपद्ये ताभ्यां नमोऽस्तु तौ मोत्तरतो गोपायेतामिति ॥१७॥ निष्ठितां प्रपद्यते धर्मस्थूणा राजꣳ श्रीस्तूपमहोरात्रे द्वारफलके । इन्द्रस्य गृहा वसुमन्तो वरूथिनस्तानहं प्रपद्ये सह प्रजया पशुभिः सह । यन्मे किञ्चिदस्त्युपहूतः सर्वगणसखायसाधुसंवृत्तः[1] । तान्त्वा शालेऽरिष्टवीरा गृहान्नः सन्तु सर्वतः इति ॥१८॥ ततो ब्राह्मणभोजनम् ॥१९॥ ॥४॥

—:०:—

# पञ्चमी कण्डिका

[2]अथातो वापीकूपतडागारामदेवतायतनपुष्करणीनां[3] प्रतिष्ठापनं व्याख्यास्यामः ॥१॥ [4]तत्रोदगयन आपूर्यमाणपक्षे

---

१. '०साधुसम्मतः' इति ग. कोशे ।

२. इयं कण्डिका ग. कोशे तृतीयकाण्डस्यान्तिम कण्डिका रूपेण पठ्यते । शालाकर्म प्रकरण एव वापीकूपादीनां प्रतिष्ठापनं युक्तियुक्तं प्रतीयते । तस्मात् ग. कोशस्थाः पाठभेदा इहैव संगृह्यन्ते ।

३. '०देवतायतनानां प्रतिष्ठापनं' इति छ. कोशे परिशिष्टे ।

४. 'तत्र' इति नास्ति ग. कोशे ।

पुण्याहे[1] तिथिवारकरणे नक्षत्रे च[2] गुणान्विते ॥२॥ तत्र वारुणं यवमयं चरुं श्रपयित्वाऽऽज्यभागाविष्ट्वाऽऽज्याहुतीर्जुहोति[3] —त्वन्नो स त्वन्नो[4] अग्न इमं मे वरुण तत्त्वा यामि ये ते शतमयाश्चाग्न उदुत्तममुरुं हि राजा वरुणस्योत्तम्भनमग्नेरनीकमिति ॥३॥ दर्शश्चरुं हुत्वा स्थालीपाकस्य जुहोति—अग्नये स्वाहा[5] सोमाय स्वाहा वरुणाय स्वाहा यज्ञाय स्वाहोग्राय स्वाहा भीमाय स्वाहा शतक्रतवे स्वाहा व्युष्ट्यै स्वाहा स्वर्गाय स्वाहेति ॥४॥ यथोक्तं स्विष्टकृत्[6] ॥५॥ प्राशनान्ते जलचराणि[7] क्षिप्त्वालंकृत्य गां तारयित्वा [8]पुरुषसूक्तं जपन्नाचार्याय वरं दत्वा [9]वासोयुग्मं धेनुर्दक्षिणा च ॥६॥ ततो ब्राह्मणभोजनम् ॥७॥ ॥५॥

—:०:—

१. 'पुण्याहे' इति नास्ति ग. कोशे।

२. 'तिथिवारनक्षत्रकरणे च' इति छ. कोशे परिशिष्टे।

३. '०ज्याहुती जुहोति' इति ग. कोशे।

४. 'सत्वनो' इति नास्ति ग. कोशे, छ. कोशस्थे च परिशिष्टे। दीक्षितकामदेवव्याख्यायामुपलभ्यते।

५. 'सोमाय' इत्यारभ्य 'शतक्रतवे स्वाहा' इत्यन्तः पाठो लेखकप्रमादात् त्रुटितो ग. कोशे।

६. अस्य सूत्रस्य स्थाने 'अग्नये स्विष्टकृते स्वाहा' इति ग. कोशे पाठः।

७. 'जलचरान्' इति ग. कोशे।

८. 'पुरुषसूक्तं जपन्' इति नास्ति ग. कोशे।

९. अयं दीक्षित कामदेवेन व्याख्यात पाठः। 'वासो युग्मं धेनुर्दक्षिणा' इति ग. कोशे। 'गां तारयित्वाऽऽचार्याय वरं दत्त्वा कर्णवेष्टकौ वासांसि धेनुर्दक्षिणा च' इति दीक्षितकामदेवनिर्दिष्टं पाठान्तरम्। अयमेव च छ. कोशस्थे परिशिष्टे पाठः।

# षष्ठी कण्डिका

अथातो मणिकावधानम् ॥१॥ उत्तरपूर्वस्यां दिशि यूपवद्-वटं खात्वा कुशानास्तीर्याक्षतानरिष्टकाँश्चान्यानि' चाभि-मङ्गलानि तस्मिन् मिनोति, मणिकꣳ समुद्रोऽसीति ॥२॥ अप आसिञ्चति—आपो रेवतीः क्षयथा हि वस्वः क्रतु च भद्रं विभृथामृतं च। रायश्च स्थस्वपत्यस्य पत्नी सरस्वती तद् गृणते वयोऽधादिति ॥३॥ आपो हिष्ठेति च तिसृभिः ॥४॥ ततो ब्राह्मणभोजनम् ॥५॥ ॥६॥

—:०:—

# सप्तमी कण्डिका

अथातः शीर्षरोग भेषजम् ॥१॥ पाणी प्रक्षाल्य भ्रुवौ विमार्ष्टि ॥२॥ चक्षुर्भ्याꣳ श्रोत्राभ्यां गोदानाच्छुबुकादधि यक्ष्मꣳ शीर्षण्यꣳ रराटाद्विवृहामीममिति। अर्द्धं चेद्—अवभेदक विरूपाक्ष श्वेवपक्ष महायशः। अथो चित्रपक्ष शिरो माऽस्याभिताप्सीदिति ॥३॥ क्षेम्यो हैव भवति ॥४॥ ॥७॥

—:०:—

१. '०नरिष्टाँ (सुमनसः कपर्दिकान्) श्चान्यानि' इति छ. कोशे पाठः। ( ) कोष्ठकान्तर्गतः पाठ प्रक्षिप्त इति। तथा पाठे यथामुद्रितः सन्धिर्नोपपद्यते।

# अष्टमी कण्डिका

उतूलपरिमेहः[1] ॥१॥ स्वपतो जीवविषाणे स्वं मूत्रमसिच्यापसलवि[2] त्रिः परिषिञ्चन् परीयात्—परि त्वा गिरेरहं परिमातुः परि स्वसुः। परि पित्रोश्च भ्रात्रोश्च सख्येभ्यो विसृजाम्यहम्। उतूल परिमीढोऽसि परिमीढः क्व गमिष्यसीति ॥२॥ स यदि भ्राम्याद् दावाग्निमुपसमाधाय घृताक्तानि कुशेण्ड्वानि[3] जुहुयात्—परि त्वा ह्वलनो ह्वल निर्वृत्तेन्द्रवीरुधः। इन्द्रपाशेन सित्वा[4] मह्यं मुक्त्वाऽथान्यमानयेदिति ॥३॥ क्षेम्यो ह्येव भवति ॥४॥ ॥८॥

—:०:—

# नवमी कण्डिका

शूलगवः ॥१॥ स्वर्ग्यः पशव्यः पुत्र्यो धन्यो यशस्य आयुष्यः ॥२॥ औपासनमरण्यं हृत्वा वितानं साधयित्वा रौद्रं पशुमालभेत ॥३॥ साण्डम् ॥४॥ गौर्वा शब्दात् ॥५॥ वपार्थं श्रपयित्वा स्थालीपाकमवदानानि[5] च रुद्राय वपामन्तरिक्षाय वसार्थं स्थालीपाकमिश्राण्यवदानानि जुहोति—अग्नये[6] रुद्राय शर्वाय पशुपतये उग्रायाशनये भवाय महादेवाये-

१. उतूलो दुर्विनीतो दासः, तस्य परिमेहो वशीकरणं वक्ष्यत इति शेषः।

२. अपसलवि=अप्रदक्षिणम्। 'अपसलमेव' इति कर्कः।

३. 'कुशेण्ड्वाणि' इति नास्ति ग. कोशे। कुशेण्ड्वानि=कुशानां कुण्डलाकाराणि त्रीणि।

४. 'छित्वा' इति ग. कोशे।

५. 'स्थालीपाकमिश्रमवदानानि' इति ग. कोशे।

६. 'जुहोत्यग्नये' इति नास्ति च. कोशे।

शानायेति च ॥६॥ 'वनस्पतिः[2] ॥७॥ स्विष्टकृदन्ते ॥८॥ दिग्व्याघारणम्[3] ॥९॥ व्याघारणान्ते पत्नीः संयाजयन्ति— इन्द्राण्यै रुद्राण्यै शर्वाण्यै भवान्या अग्निं गृहपतिमिति ॥१०॥ लोहितं पालाशेषु कूर्चेषु[4] रुद्राय सेनाभ्यो बलिꣳ हरति— यास्ते रुद्र पुरस्तात् सेनास्ताभ्य एष बलिस्ताभ्यस्ते नमो यास्ते रुद्र दक्षिणतः सेनास्ताभ्य एष बलिस्ताभ्यस्ते नमो यास्ते रुद्र पश्चात् सेनास्ताभ्य एष बलिस्ताभ्यस्ते नमो यास्ते रुद्रोत्तरतः सेनास्ताभ्य एष बलिस्ताभ्यस्ते नमो यास्ते रुद्रोपरिष्टात् सेनास्ताभ्य एष बलिस्ताभ्यस्ते नमो यास्ते रुद्राधस्तात् सेनास्ताभ्य एष बलिस्ताभ्यस्ते नम इति ॥११॥ ऊवध्यं लोहितलिप्तमग्नौ प्रास्यत्यधो वा निखनति ॥१२॥ अनुवातं पशुमवस्थाप्य रुद्रैरुपतिष्ठते प्रथमोत्तमाभ्यां वाऽनुवाकाभ्याम् ॥१३॥ नैतस्य पशोर्ग्रामꣳ हरन्ति ॥१४॥ एतेनैव गोयज्ञो व्याख्यातः ॥१५॥ पायसेनानर्थलुप्तः ॥१६॥ तस्य तुल्यवया गौर्दक्षिणा ॥१७॥ ॥६॥

—:o:—

# दशमी कण्डिका

अथ वृषोत्सर्गः ॥१॥ गोयज्ञेन व्याख्यातः ॥२॥ कार्तिक्यां पौर्णमास्याꣳ रेवत्यां वाऽऽश्वयुजस्य ॥३॥ मध्ये गवाꣳ सुसमिद्धमग्निं कृत्वाऽऽज्यꣳ संस्कृत्य—इह रतिरिति षट्

१. वनस्पतिहोमः पृषदाज्येनेति व्याख्यातारः ।

२. हरिहरस्तु 'वनस्पतिस्विष्टकृदन्ते' इत्येकं पदं स्वीकृत्य व्याचख्यौ । तथा सत्येकं सूत्रं ज्ञेयम् ।

३. ग. कोशे 'दिशां वसया कुर्यात्' इति व्याख्यापाठोऽत्र दृश्यते ।

४. 'कूर्चेषु' इति नास्ति ग. कोशे ।

जुहोति प्रतिमन्त्रम् ॥४॥ पूषा गा अन्वेतु नः पूषा [1]रक्षत्वर्वतः ।
पूषा व्वाजꣳ सनोतु नः स्वाहा इति पौष्णस्य जुहोति ॥५॥
रुद्रान् जपित्वैकवर्णं द्विवर्णं वा यो वा यूथं[1] छादयति यं वा
यूथं छादयेद् रोहितो वैव स्यात् सर्वाङ्गैरुपेतो जीववत्सायाः
पयस्विन्याः पुत्रो यूथे च रूपस्वित्तमः स्यात् तमलंकृत्य यूथे
मुख्याश्चतस्रो वत्सतर्यस्ताश्चालंकृत्य—एतं युवानं पतिं वो
ददामि तेन क्रीडन्तीश्चरथ प्रियेण । मा[2] नः साप्तजनुषाऽ-
सुभगा रायस्पोषेण समिषा मदेमेत्येतयैवोत्सृजेरन् ॥६॥
नभ्यस्थमभिमन्त्रयते—मयो भूरित्यनुवाकशेषेण[3] ॥७॥ सर्वासां
पयसि पायसꣳ श्रपयित्वा ब्राह्मणान् भोजयेत् ॥८॥ पशुमध्येके
कुर्वन्ति ॥९॥ तस्य शूलगवेन कल्पो व्याख्यातः ॥१०॥ ॥१०॥

—:०:—

# एकादशी कण्डिका

अथोदककर्म ॥१॥ अद्विवर्षे प्रेते मातापित्रोराशौचम् ॥२॥
शौचमेवेतरेषाम् ॥३॥ एकरात्रं त्रिरात्रं वा ॥४॥ शरीरमदग्ध्वा
निखनन्ति ॥५॥ अन्तःसूतके चेदोत्थानादाशौचꣳ सूत-
कवत् ॥६॥ नात्रोदककर्म ॥७॥ द्विवर्षप्रभृति प्रेतमाश्मशानात्
सर्वेऽनुगच्छेयुः ॥८॥ यमगाथां गायन्तो यमसूक्तं च जपन्त
इत्येके ॥९॥ यद्युपेतो भूमिजोषणादिसमानमाहिताग्नेरोदका-
न्तस्य गमनात् ॥१०॥ शालाग्निना दहन्त्येनमाहितश्चेत् ॥११॥

---

१. अयं पाठो नास्ति ग. कोशे । दृष्टिदोषात् लेखकेन परित्यक्तः ।

२. 'सा' इति ग. कोशे ।

३. इतोऽग्रे च. कोशे '(वामे चक्रं दक्षिणे त्रिशूलम्)' इत्यधिकः पाठः ।

तूष्णीं ग्रामाग्निनेतरम् ॥१२॥ संयुक्तं मैथुनं[1] वोदकं याचेरन्नुदकं करिष्यामह इति ॥१३॥ कुरुध्वं मा चैवं पुनरित्यशतवर्षे प्रेते ॥१४॥ कुरुध्वमित्येवेतरस्मिन् ॥१५॥ सर्वे ज्ञातयोऽपोऽभ्यवयन्त्यासप्तमात् पुरुषाद् दशमाद्वा ॥१६॥ समानग्रामवासे यावत् सम्बन्धमनुस्मरेयुः ॥१७॥ एकवस्त्राः प्राचीनावीतिनः ॥१८॥ सव्यस्यानामिकयाऽपनोद्याप नः शोशुचदघमिति ॥१९॥ दक्षिणामुखा निमज्जन्ति ॥२०॥ प्रेतायोदकꣳ सकृत्प्रसिञ्चन्त्यञ्जलिना—असावेतत्त उदकमिति ॥२१॥ उत्तीर्णाञ्छुचौ देशे [2]शाद्वलवत्युपविष्टाँस्तत्रैतानपवदेयुः ॥२२॥ [3]अनवेक्षमाणा ग्राममायान्ति रीतीभूताः कनिष्ठपूर्वाः ॥२३॥ निवेशनद्वारे पिचुमन्दपत्राणि विदश्याचम्योदकमग्निं गोमयं गौरसर्षपांस्तैलमालभ्याश्मानमाक्रम्य प्रविशन्ति ॥२४॥ त्रिरात्रं ब्रह्मचारिणोऽधःशायिनो न किञ्चन कर्म कुर्युर्न प्रकुर्वीरन् ॥२५॥ क्रीत्वा [4]लब्ध्वा वा दिवैवान्नमश्नीयुरमाꣳसम् ॥२६॥ प्रेताय पिण्डं दत्त्वाऽवनेजनदानप्रत्यवनेजनेषु नामग्राहम् ॥२७॥ मृन्मये ताꣳ रात्रीं क्षीरोदके विहायसि निदध्युः—प्रेतात्र स्नाहीति ॥२८॥ त्रिरात्रꣳ शावमाशौचम् ॥२९॥ दशरात्रमित्येके ॥३०॥ न स्वाध्यायमधीयीरन ॥३१॥ नित्यानि निवर्तेरन् वैतानवर्जम् ॥३२॥ शालाग्नौ चैके ॥३३॥ अन्य एतानि कुर्युः ॥३४॥ प्रेतस्पर्शिनो ग्रामं न प्रविशेयुरानक्षत्रदर्शनात् ॥३५॥ रात्रौ चेदादित्यस्य ॥३६॥ प्रवेशनादि समानमितरैः ॥३७॥ पक्षं द्वौ वाऽऽशौचम्॥३८॥ आचार्ये चैवम् ॥३९॥ मातामहयोश्च॥४०॥

---

१. मैथुनशब्देन लक्षणया श्यालः(पत्न्या भ्राता)अभिप्रेत इति व्याख्यातारः।

२. 'शाड्वल०' इति ग. च. कोशयोः।

३. 'अनपेक्षमाणा' इति ग. कोशे।

४. 'लब्ध्वा' इत्यारभ्य 'पिण्डं दत्वा' इत्यन्तः पाठो नास्ति ग. कोशे

स्त्रीणां चाप्रत्तानाम् ॥४१॥ प्रत्तानामितरे कुर्वीरन् ॥४२॥ ताश्च तेषाम् ॥४३॥ प्रोषितश्चेत् प्रेयाच्छ्रवणप्रभृति कृतोदकाः कालंशेषमासीरन् ॥४४॥ अतीतश्चेदेकरात्रं त्रिरात्रं वा ॥४५॥ अथ कामोदकान्यृत्विक्श्वशुरसखिसम्बन्धिमातुलभागिनेयानाम् ॥४६॥ [1]प्रत्तानां च ॥४७॥ एकादश्यामयुग्मान् ब्राह्मणान् भोजयित्वा मांसवत् ॥४८॥ प्रेतायोद्दिश्य गामप्येके घ्नन्ति ॥४९॥ पिण्डकरणे प्रथमः पितॄणां प्रेतः स्यात् पुत्रवाँश्चेत् ॥५०॥ निवर्तेत चतुर्थः ॥५१॥ संवत्सरं पृथगेके ॥५२॥ [2]न्यायस्तु न चतुर्थः पिण्डो भवतीति श्रुतेः ॥५३॥ अहरहरन्नमस्मै ब्राह्मणायोदकुम्भं च दद्यात् ॥५४॥ पिण्डमप्येके निपृणन्ति ॥५५॥ ॥११॥

—:o:—

## द्वादशी कण्डिका

पशुश्चेदाप्लाव्यागामग्रेणाग्नीन् परीत्य पलाशशाखां निहन्ति ॥१॥ परिव्ययणोपाकरणनियोजनप्रोक्षणान्यावृता कुर्याद्यच्चान्यत् ॥२॥ परिपशव्ये हुत्वा तूष्णीमपराः पञ्च ॥३॥ वपोद्धरणं चाभिघारयेद् देवतां चादिशेत् ॥४॥ उपाकरणनियोजनप्रोक्षणेषु स्थालीपाके चैवम् ॥५॥ वपां हुत्वाऽवदानान्यवद्यति ॥६॥ सर्वाणि त्रीणि[3] पञ्च वा ॥७॥ स्थालीपाकमिश्राण्यवदानानि जुहोति ॥८॥ पश्वङ्गं दक्षिणा ॥९॥ यद्देवते तद्दैवतं यजेत् तस्मै च भागं कुर्यात् तं च ब्रूयादि-

१. 'प्रत्तानां च स्त्रीणाम्' इति ग. कोशे ।
२. 'तस्य न्यायतस्तु' इति ग. कोशे ।
३. 'त्रीणि' इति प्रमादलुप्तं ग. कोशे ।

ममनुभापयेति ॥१०॥ नद्यन्तरे नावं कारयेन्न वा ॥११॥ ॥१२॥

—:o:—

# त्रयोदशी कण्डिका

अथातोऽवकीर्णि प्रायश्चित्तम् ॥१॥ अमावास्यायां चतुष्पथे गर्दभं पशुमालभते ॥२॥ निर्ऋतिं पाकयज्ञेन यजेत ॥३॥ अप्स्ववदानहोमः ॥४॥ भूमौ पशुपुरोडाशश्रपणम् ॥५॥ तां छविं परि दधीत ॥६॥ ऊर्ध्वबालामित्येके ॥७॥ संवत्सरं भिक्षाचर्यं चरेत् स्वकर्म परिकीर्तयन् ॥८॥ अथापरमाज्याहुती जुहोति—कामावकीर्णोऽस्म्यवकीर्णोऽस्मि काम कामाय स्वाहा। कामाभिद्रुग्धोऽस्म्यभिद्रुग्धोऽस्मि काम कामाय स्वाहेति ॥९॥ अथोपतिष्ठते—सम्मा सिञ्चन्तु मरुतः समिन्द्रः सम्बृहस्पति सं माऽयमग्निः सिञ्चतु प्रजया च धनेन चेति ॥१०॥ एतदेव प्रायश्चित्तम् ॥११॥ ॥१३॥

—:o:—

# चतुर्दशी कण्डिका

अथातः सभाप्रवेशनम् ॥१॥ सभामभ्येति सभाऽऽङ्गिरसि नादिर्नामासि त्विषिर्नामासि तस्यै ते नम इति ॥२॥ अथ प्रविशति—सभा च मा समितिश्चोभे प्रजापतेर्दुहितरौ सचेतसौ यो मा न विद्यादुप मा स तिष्ठेत् सचेतनो भवतु शंसथे[1]

---

१. 'शंगथे' इति ग. कोशेऽपपाठः।

जन इति ॥३॥ पर्षदमेत्य जपेद्—अभिभूरहमागमविराडप्रतिवाश्याः[1] । अस्याः पर्षद ईशानः सहसा सुदुष्टरो जन इति ॥४॥ स यदि मन्येत क्रुद्धोऽयमिति तमभिमन्त्रयते—या त एषा रराट्या तनूर्मन्योः[2] क्रोधस्य नाशनी । तान् देवा ब्रह्मचारिणो विनयन्तु सुमेधसः । द्यौरहं पृथिवी चाहं तौ ते क्रोधं नयामसि गर्भमश्वतर्यसहाऽसाविति ॥५॥ अथ यदि मन्येत [3]द्रुग्धोऽयमिति तमभिमन्त्रयते—तां ते वाचमास्य आदत्ते हृदय आदधे यत्र यत्र निहिता वाक्ता ततस्तत आददे यदहं ब्रवीमि तत्सत्यमधरो मत्तां द्यस्वेति ॥६॥ एतदेव वशीकरणम् ॥७॥ ॥१४॥

—:०:—

## पञ्चदशी कण्डिका

अथातो रथारोहणम् ॥१॥ युङ्क्तेति रथं सम्प्रेष्य युक्त इति प्रोक्ते सा विराडित्येत्य चक्रे अभिमृशति ॥२॥ रथन्तरमसीति दक्षिणम् ॥३॥ बृहदसीत्युत्तरम् ॥४॥ वामदेव्यमसीति कूबरीम् ॥५॥ हस्तेनोपस्थमभिमृशति—अङ्कौ न्यङ्कावभितो रथं यौ ध्वान्तं वाताग्रमनुसञ्चरन्तम् । दूरेहेतिरिन्द्रियवान् पतत्रि ते नोऽग्नयः पप्रयः[4] पारयन्त्विति ।६॥ नमो माणिचरायेति दक्षिणं धुर्यं प्राजति ॥७॥ अप्राप्य देवताः प्रत्यवरोहेत् सम्प्रति ब्राह्मणान् मध्ये गा अभिक्रम्य पितन् ॥८॥ न स्त्रीब्रह्मचारिणौ सारथी स्याताम् ॥९॥ मुहूर्तमतीयाय जपेद् इह

---

१. 'अप्रतिवाशी' इति जयरामपाठः । 'अप्रतिवाच्याः' इति ग. कोशे ।

२. 'मन्यो' इत्यपि क्वचित् पाठ इति छ. कोशे टिप्पणी ।

३. 'द्रुग्धोऽय०' इत्यारभ्य 'वाक्ता ततस्ततः' इत्यन्तः पाठो ग. कोशे नास्ति ।

४. 'नाग्नयः प्रप्रयुः' इति ग. कोशे ।

रतिरिह रमध्वम् ॥१०॥ एके माऽस्त्विह रतिरिति च ॥११॥ स यदि दुर्बलो रथः स्यात् तमास्थाय जपेद्—अयं वामश्विना रथो मा दुर्गे मा स्तरो रिषदिति ॥१२॥ [1]स यदि भ्रम्यात् स्तम्भमुपस्पृश्य भूमिं वा जपेद्—एष वामश्विना रथो मा दुर्गे मा स्तरो रिषदिति ॥१३॥ तस्य न काचनार्त्तिर्न रिष्टिर्भवति ॥१४॥ यात्वाऽध्वानं विमुच्य रथं यवसोदके दापयेद्—एष उ ह वाहनस्यापह्नव इति श्रुतेः ॥१५॥ ॥१५॥

—:०:—

# षोडशी कण्डिका

अथातो हस्त्यारोहणम् ॥१॥ एत्य हस्तिनमभिमृशति—हस्तियशसमसि हस्तिवर्चसमसीति ॥२॥ अथारोहति—इन्द्रस्य त्वा वज्रेणाभितिष्ठामि स्वस्ति मा सम्पारयेति ॥३॥ एतेनैवाश्वारोहणं व्याख्यातम् ॥४॥ उष्ट्रमारोक्ष्यन्नभिमन्त्रयते—त्वाष्ट्रोऽसि त्वष्टृदैवत्यः स्वस्ति मा सम्पारयेति ॥५॥ रासभमारोक्ष्यन्नभिमन्त्रयते—शूद्रोऽसि शूद्रजन्माग्नेयो वै द्विरेताः स्वस्ति मा सम्पारयेति ॥६॥ चतुष्पथमभिमन्त्रयते—नमो रुद्राय पथिषदे स्वस्ति मा सम्पारयेति ॥७॥ नदीमुत्तरिष्यन्नभिमन्त्रयते—नमो रुद्रायाप्सुषदे स्वस्ति मा सम्पारयेति ॥८॥ नावमारोक्ष्यन्नभिमन्त्रयते—सुनावमिति ॥९॥ उत्तरिष्यन्नभिमन्त्रयते—सुत्रामाणमिति ॥१०॥ वनमभिमन्त्रयते—नमो रुद्राय वनसदे स्वस्ति मा सम्पारयेति ॥११॥ गिरिमभिमन्त्रयते नमो रुद्राय गिरिषदे स्वस्ति मा सम्पारयेति ॥१२॥

---

१. 'स यदि' इत आरभ्य 'रिषदिति' इत्यन्तः पाठो नास्ति ग. कोशे ।

श्मशानमभिमन्त्रयते—नमो रुद्राय पितृषदे स्वस्ति मा सम्पारयेति ॥१३॥ गोष्ठमभिमन्त्रयते—नमो रुद्राय शकृत्पिण्डसदे स्वस्ति मा सम्पारयेति ॥१४॥ यत्र चान्यत्रापि नमो रुद्रायेत्येव ब्रूयाद् रुद्रो ह्येवेदꣳ सर्वमिति श्रुतेः॥१५॥ [1]सिचाऽवधूतोऽभिमन्त्रयते—सिगसि न वज्रोऽसि नमस्तेऽ अस्तु मा मा हिꣳसीरिति ॥१६॥ स्तनयित्नुमभिमन्त्रयते—शिवा नो वर्षाः सन्तु शिवा नः सन्तु हेतयः[2]। शिवा नस्ताः सन्तु यास्त्वꣳ सृजसि वृत्रहन्निति ॥१७॥ शिवां वाश्यमानामभिमन्त्रयते—शिवो नामेति ॥१८॥ शकुनिं वाश्यमानमभिमन्त्रयते—हिरण्यपर्ण शकुने देवानां प्रहितङ्गम। यमदूत नमस्तेऽस्तु किं त्वा काक्कारिणोऽब्रवीदिति ॥१९॥ [3]लक्षण्यं वृक्षमभिमन्त्रयते—मा त्वाऽशनिर्मा परशुर्मा वातो मा राजप्रेषितो दण्डः। अङ्कुरास्ते प्ररोहन्तु निवाते त्वाभिवर्षतु। अग्निष्टे मूलं मा हिꣳसीत् स्वस्ति तेऽस्तु वनस्पते स्वस्ति मेऽस्तु वनस्पत इति ॥२०॥ स यदि किञ्चिल्लभेत तत्प्रतिगृह्णाति—द्यौस्त्वा ददातु पृथिवी त्वा प्रतिगृह्णात्विति साऽस्य न ददतः क्षीयते भूयसी च प्रतिगृहीता भवति[4]। अथ यद्योदनं लभेत तत्प्रतिगृह्य द्यौस्त्वेति अस्य द्विः प्राश्नाति—ब्रह्मा त्वाऽश्नातु[5] ब्रह्मा त्वा प्राश्नात्विति॥२१॥ अथ यदि मन्थं लभेत तं प्रतिगृह्य द्यौस्त्वेति तस्य त्रिः प्राश्नाति—[5]ब्रह्मा त्वाऽऽश्नातु ब्रह्मा त्वा प्राश्नातु

---

१. 'सिक्' शब्देन वस्त्रप्रान्तैकदेशो 'दशा' इति प्रसिद्धः, 'तदुत्थो वायुरमङ्गलः' इति जयरामः। २. 'विद्युतः' इति ग. कोशे।

३. इतः पूर्वं ग. कोशे—'ऋतुमभिमन्त्रयते—शिवा नो वर्षाः सन्तु शिवा नः सं विद्युतः। शिवा नस्ताः सन्तु यास्त्वं सृज्यति वृत्रहन्निति क्षेम्या ह्येव भवति' इत्यधिकः पाठः।

४. 'प्रतिगृह्णाति' इति ग. कोशे।

५. 'ब्रह्मा त्वाऽश्नातु' इति नास्ति ग. कोशे।

ब्रह्मा त्वा पिबत्विति ॥२२॥ अथाऽतोऽधीत्याऽधीत्यानिराकरणम्—प्रतीकं मे विचक्षणं जिह्वा मे मधु यद्वचः कर्णाभ्यां भूरि शुश्रुवे मा त्वं हार्षीः श्रुतं मयि । ब्रह्मणः प्रवचनमसि [1]ब्रह्मणः प्रतिष्ठानमसि ब्रह्मकोशोऽसि सनिरसि शान्तिरस्यनिराकरणमसि ब्रह्मकोशं मे विश । वाचा त्वा पिदधामि वाचा त्वा पिदधामि तिष्ठ [2]प्रतिष्ठ स्वरकरणकण्ठ्यौरसदन्त्यौष्ठ्यग्रहणधारणोच्चारणशक्तिर्मयि भवतु आप्यायन्तु मेऽङ्गानि वाक् प्राणश्चक्षुः श्रोत्रं यशो बलम् । यन्मे श्रुतमधीतं तन्मे मनसि तिष्ठतु तिष्ठतु ॥२३॥ ॥१६॥[3]

॥ इति श्रीमत्कात्यायन-विरचिते गृह्यसूत्रे
तृतीयं काण्डं समाप्तम् ॥[4]

—:०:—

१. 'ब्रह्मणः प्रतिष्ठानमसि' इति नास्ति ग. कोशे ।

२. 'प्रतिष्ठ' इति नास्ति ग. कोशे । छ. कोशे तु 'तिष्ठ प्रतिष्ठ' इति पदे [ ] कोष्ठके पठिते ।

३. इतोऽग्रे ग. कोशे पूर्वं पठिता पञ्चमी कण्डिका इह पठयते ।

४. ग. कोशे–'इति श्री कात्यायन-पारस्कर-विचरिते गृह्यसूत्रे माध्यन्दिनीये तृतीयकाण्डः समाप्तः । सके सत्रासे १६ (=१७१६) पिंगल नामवत्सरे मार्गश्चर नद्ध पंच पेमि समरत्सः ॥ छ छ छ……इति ।

# कात्यायन-गृह्य-परिशिष्टानि[1]

## अथ शौच-सूत्रम्

### प्रथमा कण्डिका

अथातः शौचविधिं व्याख्यास्यामो दूरं गत्वा दूरतरं गत्वा यज्ञोपवीतꣳ शिरसि दक्षिणकर्णे वा धृत्वा तृणमन्तर्धानं कृत्वोपविश्याहनीत्युत्तरतो निशायां दक्षिणतः उभयोः सन्ध्ययोरुदङ्मुखो नाग्नौ न गोसमीपे नाप्सु नागे वृक्षमूले चतुष्पथे गवां गोष्ठे देवब्राह्मणसन्निधौ दहनभूमिं भस्माच्छन्नं देशं फालकृष्टभूमिं च वर्जयित्वा मूत्रपुरीषे कुर्यात्। ततः शिश्नं गृहीत्वोत्थायाद्भिः शौचं गन्धलेपहरं विदध्यात् लिङ्गे देया सकृन्मृद्वै त्रिवारं गुदे दशधा वामपाणावुभयोः सप्तवारं मृत्तिकां दद्यात्। करयोः पादयोः सकृत्सकृदेव मृत्तिका देयेति शौचं गृहस्थानां द्विगुणं ब्रह्मचारिणां त्रिगुणं वनस्थानां चतुर्गुणं यतीनामिति। यद्दिवा विहितं शौचं तदर्धं निशायां भवति मार्गे चेत्तदर्धमार्त्तश्चेद्यथाशक्ति कुर्यात् ॥१॥

—:०:—

१. छ. कोशे पारस्करगृह्यसूत्रपाठानन्तरं पञ्च कात्ययनीयानि गृह्यपरिशिष्टान्युपलभ्यन्ते। तत्र प्रथमं परिशिष्टं वापीकूपादिप्रतिष्ठापनरूपं कात्यायनगृह्यसूत्रस्य तृतीयकाण्डे पञ्चमकण्डिकायां मुद्रितम्। अवशिष्टानि चत्वारि परिशिष्टानि यथाक्रममिह मुद्र्यन्ते। अत्र सूत्रविभागोऽस्माभिर्न प्रदर्शितः यथामुद्रितमेव प्रकाश्यते।

## द्वितीया कण्डिका

प्रक्षालितपाणिपादः शुचौ देश उपविश्य नित्यं बद्धशिखी यज्ञोपवीती प्रागुदङ्मुखो वा भूत्वा जान्वोर्मध्ये करौ कृत्वाऽशूद्रानीतोदकैर्द्विजातयो यथाक्रमं हृत्कण्ठतालुगैराचामन्ति । न तद्भिन्नोष्ठेन न विरलाङ्गुलिभिर्न तिष्ठन्नैव हसन्नापि फेनबुद्बुदयुतम् । ब्रह्मतीर्थेन त्रिः पिबेत् द्विः परिमृजेत् । ब्राह्मणस्य दक्षिणहस्ते पञ्चतीर्थानि भवन्ति अङ्गुष्ठमूले ब्रह्मतीर्थं कनिष्ठिकाङ्गुलिमूले प्रजापतितीर्थं तर्जन्यङ्गुष्ठमध्यमूले पितृतीर्थमङ्गुल्यग्रे देवतीर्थं मध्येऽग्नितीर्थमित्येतानि तीर्थानि भवन्ति ॥२॥

—:o:—

## तृतीया कण्डिका

प्रथमं यत्पिबति तेन ऋग्वेदं प्रीणाति द्वितीयं यत्पिबति तेन यजुर्वेदं प्रीणाति तृतीयं यत्पिबति तेन सामवेदं प्रीणाति चतुर्थं यदि पिबेत्तेनाथर्ववेदेतिहासपुराणानि प्रीणाति यदङ्गुलिभ्यः स्रवति तेन नागयक्षकुबेराः सर्वे वेदाः प्रीणन्ति यत्पादाभ्युक्षणं पितरस्तेन प्रीणन्ति यन्मुखमुपस्पृशत्यग्निस्तेन प्रीणाति यन्नासिके उपस्पृशति वायुस्तेन प्रीणाति यच्चक्षुरुपस्पृशति सूर्यस्तेन प्रीणाति यच्छ्रोत्रमुपस्पृशति दिशस्तेन प्रीणन्ति यन्नाभिमुपस्पृशति ब्रह्मा तेन प्रीणाति यद्धृदयमुपस्पृशति तेन

परमात्मा प्रीणाति यच्छिर उपस्पृशति रुद्रस्तेन प्रीणाति यद् बाहू उपस्पृशति विष्णुस्तेन प्रीणाति मध्यमानामिकया मुखं तर्जन्यङ्गुष्ठेन नासिकां मध्यमाङ्गुष्ठेन चक्षुषी अनामिकाङ्गुष्ठेन श्रोत्रं कनिष्ठिकाङ्गुष्ठेन नाभिं हस्तेन हृदयं सर्वाङ्गुलिभिः शिर इत्यसौ सर्वदेवमयो ब्राह्मणो देहिनामित्याह इत्येवं शौचविधिं कृत्वा ब्रह्मलोके महीयते ब्रह्मलोके महीयत इत्याह भगवान् कात्यायनः ॥३॥

—:०:—

# अथ स्नान-सूत्रम्

## प्रथमा कण्डिका

अथातो नित्यस्नानं नद्यादौ मृद्गोमयकुशतिलसुमनस आहृत्योदकान्तं गत्वा शुचौ देशे स्थाप्य प्रक्षाल्य पाणिपादं कुशोपग्रहो बद्धशिखी यज्ञोपवीत्याचम्योरुꣳहीति तोयमामन्त्र्यावर्तयेद्ये ते शतमिति सुमित्रिया न इत्यपोऽञ्जलिनाऽऽदाय दुर्मित्रिया इति द्वेष्यं प्रति निषिञ्चेत् कटिं वस्त्यूरू जङ्घे चरणौ करौ मृदा त्रिस्त्रिः प्रक्षाल्याचम्य नमस्योदकमालभेदङ्गानि मृदेदं विष्णुरिति सूर्याभिमुखो निमज्जेदापो अस्मानिति स्नात्वोदिदाभ्य इत्युन्मज्ज्य निमज्ज्योन्मज्ज्याचम्य गोमयेन विलिम्पेन्मानस्तोक इति ततोऽभिषिञ्चेदिमं मे वरुणेति चतसृभिर्माप उदुत्तमं मुञ्चन्त्ववभृथेत्यन्ते चैतन्निमिज्ज्योन्मज्ज्याचम्य दर्भैः पावयेदापो हि ष्ठेति तिसृभिरिदमापो हविष्मतीर्देवीराप इति द्वाभ्यामपो देवा द्रुपदादिव शं नो देवीरपाꣳरसमपो देवीः पुनन्तु मेति नवभिश्चित्पतिर्मेत्योङ्कारेण व्याहृतिभिर्गायत्र्या चादावन्ते चान्तर्जलेऽघमर्षणं त्रिरावर्त्तयेद् द्रुपदादिवायं गौरिति वा त्र्यृचं प्राणायामं वा सशिरसमोमिति वा विष्णोर्वा स्मरणम् ॥१॥

—:०:—

## द्वितीया कण्डिका

उत्तीर्य धौते वाससी परिधाय मृदोरूकरौ प्रक्षाल्याचम्य त्रिरायम्यासून पुष्पाण्यम्बुमिश्राण्यूर्द्ध्वं क्षिप्त्वोर्ध्वबाहुः सूर्यमुदीक्षन्नुद्वयमुदुत्यं चित्रं तच्चक्षुरिति गायत्र्या च यथाशक्ति विभ्राडित्यनुवाकपुरुषसूक्तशिवसंकल्पमण्डलब्राह्मणैरित्युपस्थाय प्रदक्षिणीकृत्य नमस्कृत्योपविशेत् दर्भेषु दर्णपाणिः स्वाध्यायं च यथाशक्त्यादावारभ्य वेदम् ॥२॥

—:o:—

## तृतीया कण्डिका

ततस्तर्पयेद्ब्रह्माणं पूर्वं विष्णुꣳ रुद्रं प्रजापतिं देवांश्छन्दाꣳसि वेदानृषीन् पुराणाचार्यान् गन्धर्वानितराचार्यान्त्संवत्सरं च सावयवं देवीरप्सरसो देवानुगान्नागान्सागरान्पर्वतान्सरितो मनुष्यान् यक्षान् रक्षाꣳसि पिशाचान्सुपर्णान् भूतानि पशून् वनस्पतीनोषधीर्भूतग्रामश्चतुर्विधस्तृप्यतामिति ॐकारपूर्वं ततो निवीती मनुष्यान् । सनकं च सनन्दनं तृतीयं च सनातनम् । कपिलमासुरिं चैव वोढुं पञ्चशिखं तथा । ततोऽपसव्यं तिलमिश्रं कव्यवाडनलꣳ सोमं यममर्यमणमग्निष्वात्तान् सोमपो बर्हिषदो यमांश्चैके । यमाय धर्मराजाय मृत्यवे चान्तकाय च । वैवस्वताय कालाय सर्वभूतक्षयाय च । औदुम्बराय दध्नाय नीलाय परमेष्ठिने । वृकोदराय चित्राय चित्रगुप्ताय वै नम इति "एकैकस्य तिलैर्मिश्रांस्त्रींस्त्रीन्दद्याज्जलाञ्जलीन् । यावज्जीवकृतं पापं तत्क्षणादेव नश्यति" जीवत्पितृकोऽप्ये-

तानन्याँश्चेतर उदीरतामङ्गिरस आयन्तु न ऊर्ज्जं वहन्ती पितृभ्यो ये चेह मधुव्वाता इति त्र्यृचं जपन् प्रसिञ्चेत्तृप्यध्वमिति त्रिर्नमो व इत्युक्त्वा मातामहानां चैवं गुरुशिष्यर्त्विग्ज्ञाति-बान्धवानतर्पिता देहाद्रुधिरं पिबन्ति वासो निष्पीड्याचम्य ब्राह्मवैष्णवरौद्रसावित्रमैत्रावारुणैस्तल्लिङ्गैरर्चयेददृश्रꣳ हꣳस इत्युपस्थाय प्रदक्षिणीकृत्य दिशश्च देवताश्च नमस्कृत्योपविश्य ब्रह्माग्निपृथिव्योषधिवाग्वाचस्पतिविष्णुमहद्भ्योऽद्भ्योऽपाम्प-तये वरुणाय नम इति सर्वत्र संवर्चसेति मुखं विमृष्टे देवा गातु विद इति विसर्जयेदेष स्नानविधिरेष स्नानविधिः ॥३॥

॥ इति श्रीकात्यायनोक्तं त्रिकण्डिकासूत्रं समाप्तम् ॥

—:०:—

# अथ श्राद्ध-सूत्रम्

## प्रथमा कण्डिका

अपरपक्षे श्राद्धं कुर्वीतोर्ध्वं वा चतुर्थ्यां यदहः सम्पद्येत तदहर्ब्राह्मणानामन्त्र्य पूर्वेद्युर्वा स्नातकानेके यतीन् गृहस्थान् साधून्वा श्रोत्रियान् वृद्धाननवद्यान्स्वकर्मस्थानभावेऽपि शिष्यान्स्वाचारान् द्विर्नग्नशुक्लविक्लिधश्यावदन्तविद्धप्रजननव्याधितव्यङ्गिश्वित्रिकुष्ठिकुनखिवर्जमनिन्द्येनामन्त्रितो नापक्रामेदामन्त्रितो वाऽन्यदन्नं न प्रतिगृह्णीयात्स्नाताञ्छुचीनाचान्तान् प्राङ्मुखानुपवेश्य दैवे युग्मानयुग्मान्यथाशक्ति पित्र्य एकैकस्योदङ्मुखान्द्वौ वा दैवे त्रीन् पित्र्य एकैकमुभयत्र वा मातामहानां चैवं तन्त्रं वा वैश्वदेविकम् । श्रद्धान्वितः श्राद्धं कुर्वीत शाकेनापि नापरपक्षमतिक्रामेन्मासि मासि वोशनमिति श्रुतेस्तदहः शुचिरक्रोधनोऽत्वरितोऽप्रमत्तः सत्यवादी स्यादध्वमैथुनश्रमस्वाध्यायान्वर्जयेदावाहनादि वाग्यत उपस्पर्शनादामन्त्रिताश्चैवम् ॥१॥

—:०:—

## द्वितीया कण्डिका

दैवपूर्वं श्राद्धं पिण्डपितृयज्ञवदुपचारः पित्र्ये द्विगुणास्तु दर्भाः पवित्रपाणिर्दद्यादासीनः सर्वत्र प्रश्नेषु पङ्क्तिमूर्द्धन्यं पृच्छति सर्वान्वाऽऽसनेषु दर्भानास्तीर्य विश्वान्देवानावाहयिष्य इति पृच्छत्यावाहयेत्यनुज्ञातो विश्वेदेवास आगतेत्यनयाऽऽवाह्यावकीर्य विश्वेदेवाः शृणुतेममिति जपित्वा पितृनावाहयिष्य इति

पृच्छत्यावाहयेत्यनुज्ञात उशन्तस्त्वेत्यनयाऽऽवाह्यावकीर्यायन्तु न इति जपित्वा यज्ञियवृक्षचमसेषु पवित्रान्तर्हितेष्वेकैकस्मिन्नप आसिञ्चति शं नो देवीरित्येकैकस्मिन्नेव तिलानावपति तिलोऽसि सोमदैवत्यो गोसवो देवनिर्मितः। प्रत्नमद्भिः पृक्तः स्वधया पितॄँल्लोकान् प्रीणाहि नः स्वाहेति सौवर्णराजतौदुम्बर-खड्गमणिमयानां पात्राणामन्यतमेषु या न वा विद्यन्ते पत्रपुटेषु वैकैकस्यैकैकेन ददाति सपवित्रेषु हस्तेषु या दिव्या आपः पयसा सम्बभूवुर्या आन्तरिक्षा उत पार्थिवीर्याः। हिरण्यवर्णाः यज्ञियास्ता न आपः शिवाः शꣳस्योनाः सुहवा भवन्त्वित्य-सावेष तेऽर्घ इति प्रथमे पात्रे सꣳस्रवान्समवनीय पितृभ्यः स्थानमसीति न्युब्जं पात्रं निदधात्यत्र गन्धपुष्पधूपदीपवास-सांच प्रदानम् ॥२॥

—:०:—

## तृतीया कण्डिका

उद्धृत्य घृताक्तमन्नं पृच्छत्यग्नौ करिष्य इति कुरुष्वेत्य-नुज्ञातः पिण्डपितृयज्ञवद्धुत्वा हुतशेषं दत्वा पात्रमालभ्य जपति पृथिवी ते पात्रं द्यौरपिधानं ब्राह्मणस्य मुखे अमृते अमृतं जुहोमि स्वाहेति वैष्णव्यर्चा यजुषा वाऽङ्गुष्ठमन्नेऽवगाह्यापहता इति तिलान्प्रकीर्योष्णꣳ स्विष्टमन्नं दद्याच्छक्त्या वाऽश्नत्सु जपेद्व्याहृतिपूर्वां गायत्रीꣳसप्रणवाꣳ सकृत्त्रिर्वा राक्षोघ्नीः पित्र्यमन्त्रान्पुरुषसूक्तमप्रतिरथमन्यानि च पवित्राणि तृप्तान् ज्ञात्वाऽन्नं प्रकीर्य सकृत्सकृदपो दत्वा पूर्ववद् गायत्रीं जपित्वा मधुमतीर्मधुमध्विति च तृप्ताः स्थेति पृच्छति तृप्ताः स्म इत्यनु-ज्ञातः शेषमन्नमनुज्ञाप्य सर्वमन्नमेकतोद्धृत्योच्छिष्टसमीपे दर्भेषु

त्रींस्त्रीन् पिण्डानवनेज्य दद्यादाचान्तेष्वित्येक आचान्तेषूदकं पुष्पाण्यक्षतानक्षय्योदकं च दद्यादघोराः पितरः सन्तु सन्त्वित्युक्ते गोत्रं नो वर्धतां वर्धतामित्युक्ते दातारो नोऽभिवर्धन्तां वेदाः सन्ततिरेव च। श्रद्धा च नो मा व्यगमद्बहुधेयं च नोऽस्त्विंत्याशिषः प्रतिगृह्य स्वधावाचनीयान्त्सपवित्रान् कुशानास्तीर्य स्वधां वाचयिष्य इति पृच्छति वाच्यतामित्यनुज्ञातः पितृभ्यः पितामहेभ्यः प्रपितामहेभ्यो मातामहेभ्यः प्रमातामहेभ्यो वृद्धप्रमातामहेभ्यश्च स्वधोच्यतामित्यस्तु स्वधेत्युच्यमाने स्वधावाचनीयेष्वपो निषिञ्चति ऊर्ज्जमित्युत्तानं पात्रं कृत्वा यथाशक्ति दक्षिणां दद्याद् ब्राह्मणेभ्यो विश्वेदेवाः प्रीयन्तामिति दैवे वाचयित्वा वाजे वाजेऽवतेति विसृज्यामा वाजस्येत्यनुव्रज्य प्रदक्षिणीकृत्योपविशेत् ॥३॥

—:o:—

## चतुर्थी कण्डिका

अथैकोद्दिष्टमेकोऽर्घ एकं पवित्रमेकः पिण्डो नावाहनं नाग्नौकरणं नात्र विश्वेदेवाः स्वदितमिति तृप्तिप्रश्नः। सुस्वदितमितीतरे ब्रूयुरुपतिष्ठतामित्यक्षय्यस्थानेऽभिरम्यतामिति विसर्गोऽभिरताः स्म इतीतरे ॥४॥

—:o:—

## पञ्चमी कण्डिका

ततः संवत्सरे पूर्णे त्रिपक्षे द्वादशाहे वा यदहर्वा वृद्धिरापद्येत चत्वारि पात्राणि सतिलगन्धोदकानि पूरयित्वा त्रीणि पितृणा-

मेकं प्रेतस्य । प्रेतपात्रं पितृपात्रेष्वासिञ्चति । ये समाना इति द्वाभ्याम् । एतेनैव पिण्डो व्याख्यातः । अत ऊर्द्ध्वं संवत्सरे संवत्सरे प्रेतायान्नं दद्यात् यस्मिन्नहनि प्रेतः स्यात् ॥५॥

—:०:—

## षष्ठी कण्डिका

आभ्युदयिके प्रदक्षिणमुपचारः पूर्वाह्णे पित्र्यमन्त्रवर्जं जप ऋजवो दर्भा यवैस्तिलार्थाः सम्पन्नमिति तृप्तिप्रश्नः सुसम्पन्नमितीतरे ब्रूयुर्दधिबदराक्षतमिश्राः पिण्डा नान्दीमुखान् पितृनावाहयिष्य इति पृच्छत्यावाहयेत्यनुज्ञातो नान्दीमुखाः पितरः प्रीयन्तामित्यक्षय्यस्थाने नान्दीमुखान् पितॄन्वाचयिष्य इति पृच्छति वाच्यंतामित्यनुज्ञातो नान्दीमुखाः पितरः पितामहाः प्रपितामहाः मातामहाः प्रमातामहा वृद्धप्रमातामहाश्च प्रीयन्तामिति न स्वधां प्रत्युञ्जीत युग्मानाशयेदत्र ॥६॥

—:०:—

## सप्तमी कण्डिका

अथ तृप्तिर्ग्राम्याभिरोषधीभिर्मासं तृप्तिस्तदभाव आरण्याभिर्मूलफलैरोषधीभिर्वा सहान्नेनोत्तरास्तर्पयन्ति छागोस्रमेषानालभ्य क्रीत्वा लब्ध्वा वा न स्वयंमृतानाहृत्य पचेन्मासद्वयं तु मत्स्यैर्मासत्रयं तु हारिणेन चतुरऽऔरभ्रेण पञ्च शाकुनेन षट् छागेन सप्त कौर्मेणाष्टौ वाराहेण नव मेषमाᳩसेन दश माहिषेणैकादश पार्षतेन संवत्सरं तु गव्येन पयसा पायसेन वा वार्ध्रीणसमाᳩसेन द्वादशवर्षाणि ॥७॥

—०—

# अष्टमी कण्डिका

अथाक्षय्यतृप्तिः खड्गमाᳪंसं कालशाकं लोहछागमाᳪंसं मधु महाशल्को वर्षासु मघाश्राद्धᳫं हस्तिच्छायायां च, मन्त्राध्यायिनः पूताः शाखाध्यायी षडङ्गविज्ज्येष्ठसामगो गायत्रीसारमात्रोऽपि पञ्चाग्निः स्नातकस्त्रिणाचिकेतस्त्रिमधुस्त्रिसुपर्णी द्रोणपाठको ब्राह्मणोढापुत्रो वागीश्वरो याज्ञिकश्च नियोज्या अभावेऽप्येकं वेदविदं पङ्क्तिमूर्धनि नियुञ्ज्यात्, आसहस्रात्पङ्क्तिं पुनातीति वचनात् ॥८॥

—:०:—

# नवमी कण्डिका

अथ काम्यानि भवन्ति स्त्रियोऽप्रतिरूपाः प्रतिपदि द्वितीयायाᳪं स्त्रीजन्मास्वास्तृतीयायां चतुर्थ्यां क्षुद्रपशवः पुत्राः पञ्चम्यां द्यूतर्द्धिः षष्ठ्यां कृषिः सप्तम्यां वाणिज्यमष्टम्यामेकशफं नवम्यां दशम्यां गावः परिचारका एकादश्यां धनधान्यानि द्वादश्यां कुप्यᳫं हिरण्यं ज्ञातिश्रैष्ठ्यं च त्रयोदश्यां युवानस्तत्र म्रियन्ते शस्त्रहतस्य चतुर्दश्याममावास्यायाᳪं सर्वमित्यमावास्यायाᳪं सर्वमिति ॥९॥

—:०:—

# अथ भोजन-सूत्रम्

## प्रथमा कण्डिका

वन्दे श्री दक्षिणामूर्त्ति सच्चिदानन्दविग्रहम् ।
सर्वार्थानां प्रदातारं शिवादेहार्धधारिणम् ॥१॥

अथातः श्रुतिस्मृतीरनुसृत्य भोजनविधिं व्याख्यास्यामः । आचान्तो धृतोत्तरीयवस्त्रो धृतश्रीखण्डगन्धपुण्ड्रो भोजनशालामागत्य गोमयेनोपलिप्य शुचौ देशे विहितपीठाधिष्ठितो नित्यप्राङ्मुखो न दक्षिणामुखो न प्रत्यङ्मुखो न विदिङ्मुखः । श्रीकामश्चेत्प्रत्यङ्मुखः सत्यकामश्चेदुदङ्मुखो यशस्कामश्चेद्दक्षिणामुखो जीवन्मातृकवर्जं हस्तपादास्येषु पञ्चस्वार्द्रो नीवारचूर्णैर्गोमृदा भस्मनोदकेन वा मण्डलं कुर्यात् चतुष्कोणं ब्राह्मणस्य त्रिकोणं क्षत्रियस्य मण्डलाकृति वैश्यस्याभ्युक्षणꣳ शूद्रस्य यथा चक्रायुधो विष्णुस्त्रैलोक्यं परिरक्षति । एवं मण्डलभस्मैतत्सर्वभूतानि रक्षत्विति तत्र भूमौ निहितपात्रेऽन्ने परिविष्टे पितुन्नु स्तोषमित्यन्नꣳ स्तुत्वा मानस्तोके नमो वः किरिकेभ्यो नमः शम्भवायेत्यभिमन्त्र्य प्रोक्षयेत्, सत्यन्त्वर्त्तेन परिषिञ्चामीति प्रातर्ऋतन्त्वा सत्येन परिषिञ्चामीति सायम् । तेजोऽसि शुक्रमस्यमृतमसीति यजुषाऽन्नमभिमृश्याग्निरस्मीत्यात्मानमग्निं ध्यात्वा भूपतये भुवनपतये भूतानाम्पतय इति चित्राय चित्रगुप्ताय सर्वेभ्यो भूतेभ्यो नम इति दिवा प्रणवादिकैः स्वाहा नमोऽन्तैर्मन्त्रैः प्रतिमन्त्रं बलीन् हरेत्, अन्तश्चरसि भूतेषु गुहायां विश्वतोमुखः । त्वं ब्रह्म त्वं यज्ञस्त्वं वषट्कारस्त्वमोङ्कारस्त्वं विष्णोः परमं पदम् । अमृतोपस्तरणमसि स्वाहेति विष्णुमन्त्र-

मभिध्यायन्नाचम्यान्नममृतं ध्यायन् मौनी हस्तचापल्यादिरहितो मुखे पञ्च प्राणाहुतीर्जुहोति ॥१॥

—:०:—

## द्वितीया कण्डिका

प्राणाय स्वाहाऽपानाय स्वाहा व्यानाय स्वाहा समानाय स्वाहोदानाय स्वाहेति क्रमं याज्ञवल्क्यो मन्यत उदानाय स्वाहेति शौनकबौधायनौ । याज्ञवल्क्योदितक्रमो वाजसनेयिनाम् । दन्तैर्नोपस्पृशेत् । जिह्वया ग्रसेदङ्गुष्ठप्रदेशिनीमध्यमाभिः प्रथमामङ्गुष्ठमध्यमानामिकाभिर्द्वितीयामङ्गुष्ठानामिकाकनिष्ठिकाभिस्तृतीयां कनिष्ठिकातर्जन्यङ्गुष्ठैश्चतुर्थीं सर्वाभिरङ्गुलीभिः साङ्गुष्ठाभिः पञ्चमीम् । अङ्गुष्ठानामिकाग्राभ्यामन्नेनैता आहुतय इति हारीतव्याख्यातारः । सर्वाभिरेता इति बौधायनः । मौनं त्यक्त्वा प्राग्द्रवरूपमश्नीयान्मध्ये कठिनमन्ते पुनर्द्रवाशी स्यान्मधुरं पूर्वं लवणाम्लौ मध्ये कटुतिक्तादिकान् पश्चाद्यथासुखं भुञ्जीत भुञ्जानो वामहस्तेनान्नं न स्पृशेन्न पादौ न शिरो न बस्ति न पराभोजनं स्पृशेदेवं यथारुचि भुक्त्वा भुक्तशेषमन्नमादाय "मद्भुक्तोच्छिष्टशेषं ये भुञ्जते पितरोऽधमाः । तेषामन्नं मया दत्तमक्षय्यमुपतिष्ठतु" इति पितृतीर्थेन दत्वाऽमृतापिधानमसि स्वाहेति हस्तगृहीतानामपामर्धं पीत्वाऽर्धं भूमौ निक्षिपेत् रौरवे पूयनिलये पद्मार्बुदनिवासिनाम् । अर्थिनां सर्वभूतानामक्षय्यमुपतिष्ठत्विति, तस्मादेशादपसृत्य गण्डूषशलाकादिभिस्तर्जनीवर्जमास्यं शोधयेत् ॥२॥

—:०:—

## तृतीया कण्डिका

न भार्यादर्शनेऽश्नीयान्न भार्य्यया सह न सन्ध्ययोर्न मध्याह्ने नार्धरात्रे नायज्ञोपवीती नाऽऽर्द्रशिरा नार्द्रवासा नैकवासा न शयानो न ताम्रभाजने न भिन्ने न राजतसौवर्णशङ्खस्फाटिक-कांस्यभाजनवर्जं न लौहे न मृन्मये न सन्धिसंस्थिते न भुवि न पाणौ न सर्वभोजी स्यात् किञ्चिद्भोज्यं परित्यजेदन्यत्र घृतपायसदधिसक्तुपललमधुभ्यः, साञ्चाचान्तो दक्षिणपादाङ्गुष्ठे पार्णि निःस्रावयेदङ्गुष्ठमात्रः पुरुषो अङ्गुष्ठं च समाश्रितः। ईशः सर्वस्य जगतः प्रभुः प्रीणातु विश्वभुगिति श्वात्राः पीता इति नाभिमालभेत, अमृताः इत्यतः प्रागगस्त्यं वैनतेयं च शनिं च वडवानलम्। आहारपरिणामार्थं स्मरेद् भीमं च पञ्च-ममित्युदरमालभ्य 'शर्य्यातिञ्च सुकन्या च च्यवनं शक्रमश्विनौ भोजनान्ते स्मरेन्नित्यं तस्य चक्षुर्न हीयत' इति स्मृत्वा मुखशुद्धिं कुर्यान्नमो भगवते वाजसनेयाय याज्ञवल्क्याय नमो भगवते वाजसनेयाय याज्ञवल्क्याय ॥३॥

॥ इति श्री कात्यायनोक्तभोजनसूत्रं समाप्तम् ॥

वन्देहं मङ्गलात्मानं भास्वन्तं वेदविग्रहम्।
याज्ञवल्क्यं मुनिश्रेष्ठं जिष्णुं हरिहरप्रभम् ॥
जितेन्द्रियं जितक्रोधं सदा ध्यानपरायणम्।
आनन्दनिलयं वन्दे योगानन्दं मुनीश्वरम् ॥
एवं द्वादश नामानि त्रिसन्ध्यं यः पठेन्नरः।
योगीश्वरप्रसादेन विद्यावान्धनवान् भवेत् ॥

॥ इति श्रीमत्कात्यायन-विरचितं सपरिशिष्टं गृह्य-सूत्रं समाप्तम् ॥

---

# रामलाल कपूर ट्रस्ट द्वारा

## प्रकाशित वा प्रसारित प्रामाणिक ग्रन्थ

### वेद विषयक ग्रन्थ

१. **ऋग्वेदभाष्य**—(संस्कृत हिन्दो वा ऋग्वेदादिभाष्यभूमिका सहित)-प्रतिभाग सहस्राधिक टिप्पणियां,१०-११ प्रकार के परिशिष्ट व सूचियां। प्रथम भाग ३५-००, द्वितीय भाग ३०-००, तृतीय भाग ३५-०० ।

२. **यजुर्वेदभाष्य-विवरण**—ऋषि दयानन्दकृत भाष्य पर पं० ब्रह्मदत्त जिज्ञासु कृत विवरण। प्रथम भाग अप्राप्य है। द्वितीय भाग मूल्य २५-००

३. **तैत्तिरीय-संहिता**—मूलमात्र, मन्त्र-सूची-सहित। ४०-००

४. **अथर्ववेदभाष्य**—श्री पं० विश्वनाथ जी वेदोपाध्यायकृत। १४-१७ काण्ड २४-००, १८-१९ वां काण्ड २०-००, बीसवां काण्ड २०-००,। ११-१३ काण्ड छप रहे हैं ।

५. **माध्यन्दिन—(यजुर्वेद) पदपाठ**—शुद्ध संस्करण ।
मूल्य २५-००

६. **गोपथ ब्राह्मण (मूल)**—सम्पादक श्री डा० विजयपाल जी विद्यावारिधि। अब तक प्रकाशित सभी संस्करणों से अधिक शुद्ध और सुन्दर संस्करण ! मूल्य ४०-००

७. **वैदिक-सिद्धान्त-मीमांसा**—युधिष्ठिर मीमांसक लिखित वेद-विषयक १७ विशिष्ट निबन्धों का अपूर्व संग्रह। विशिष्ट संस्करण मूल्य ३०-००

८. **ऋग्वेदानुक्रमणी**=वेङ्कट माधवकृत। इस ग्रन्थ में स्वर छन्द आदि आठ वैदिक विषयों पर गम्भीर विचार किया है। व्याख्या-कार—श्री डा० विजयपाल जी विद्यावारिधि । उत्तम-संस्करण ३०-००, साधारण २०-००

९. **ऋग्वेद की ऋक्संख्या**—युधिष्ठिर मीमांसक २-००

१०. **वैदिक-छन्दोमीमांसा**—युधिष्ठिर मीमांसक। नया संस्करण १५-००

**११. यजुर्वेद का स्वाध्याय तथा-पशुयज्ञ-समीक्षा**—लेखक पं० विश्वनाथ वेदोपाध्याय। बढ़िया जिल्द २०-००, साधारण १६-०० ।

**१२. वैदिक-पीयूष-धारा**—लेखक श्री देवेन्द्रकुमारजी कपूर। चुने हुए ५० मन्त्रों की प्रतिमन्त्र पदार्थ पूर्वक विस्तृत व्याख्या तथा अन्त में भावपूर्ण गीतों से युक्त। उत्तम संस्करण १५-००, साधारण १०-०० ।

## कर्मकाण्ड-विषयक ग्रन्थ

**१३. बौधायन-श्रौत-सूत्रम्** (दर्शपूर्णमास प्रकरण)—भवस्वामी तथा सायण कृत भाष्य सहित (संस्कृत) ४०-००

**१४. दर्शपूर्णमास-पद्धति**—पं० भीमसेन भाषार्थ सहित। २५-००

**१५. कात्यायनगृह्यसूत्रं**—मूलमात्र १५-००

**१६. संस्कार-विधि**—शताब्दी संस्करण, ४६० पृष्ठ, सहस्राधिक टिप्पणियां, १२ परिशिष्ट। मूल्य लागतमात्र १२-००, राज-संस्करण १५-००। सस्ता संस्करण मूल्य ५-२५; अच्छा कागज सजिल्द ७-५० ।

**१७. वैदिक-नित्यकर्म-विधि**—सन्ध्यादि पांचों महायज्ञ तथा बृहद् हवन मन्त्रों के पदार्थ तथा भावार्थ व्याख्या सहित। यु० मी० ३-००, सजिल्द ४-००

## शिक्षा-निरुक्त-व्याकरण-विषयक ग्रन्थ

**१८. वर्णोच्चारण-शिक्षा**—ऋषि दयानन्द कृत हिन्दी व्याख्या सहित। ०-६०

**१९. शिक्षासूत्राणि**—आपिशल-पाणिनीय-चान्द्र शिक्षा-सूत्र २-५०

**२०. निरुक्त-श्लोकवार्त्तिकम्**—केरलदेशीय नीलकण्ठ गार्ग्यविरचित एक मात्र मलयालम लिपि में ताडपत्र पर लिखित प्रति के आधार पर मुद्रित। आरम्भ में उपोद्घात रूप में निरुक्त-शास्त्र-विषयक संक्षिप्त ऐतिह्य दिया गया है (संस्कृत)। सम्पादक—डा० विजयपाल विद्यावारिधिः। उत्तम कागज, शुद्ध छपाई तथा सुन्दर जिल्द सहित। १००-००

**२१. निरुक्त-समुच्चय**—आचार्य वररुचि विरचित (संस्कृत)। सं०—युधिष्ठिर मीमांसक। १५-००

**२२. अष्टाध्यायी**—(मूल) शुद्ध-संस्करण। ३-००

**२३. धातुपाठ**—धात्वादिसूची सहित, शुद्ध संस्करण। ३-००

**२४. अष्टाध्यायीशुक्लयजुः प्रातिशाख्ययोर्मतविमर्शः** (संस्कृत)—डा० विजयपाल विद्यावारिधि। ५०-००

**२५. वामनीयं लिङ्गानुशासनम्**—स्वोपज्ञ-व्याख्यासहितम्। ८-००

२६. **अष्टाध्यायी-भाष्य**—(संस्कृत तथा हिन्दी) श्री पं० ब्रह्मदत्त जिज्ञासु कृत। प्रथम भाग २४-००, द्वितीय भाग २०-००, तृतीय भाग २०-००।

२७. **संस्कृत पठन-पाठन की अनुभूत सरलतम विधि**—लेखक—श्री पं० ब्रह्मदत्त जिज्ञासु। प्रथम भाग १०-००; द्वितीय भाग १०-००।

२८. **The Tested Easiest Method of Learning and Teaching SansKrit (First BooK)**—यह पुस्तक श्री पं० ब्रह्मदत्त जी जिज्ञासु कृत '**विना रटे संस्कृत पठन-पाठन की अनुभूत सरलतम विधि**' भाग १ का अंग्रेजी अनुवाद है। अंग्रेजी भाषा के माध्यम से पाणिनीय व्याकरण में प्रवेश करने वालों के लिये यह आधिकारिक पुस्तक है। कागज और छपाई सुन्दर, सजिल्द।
मूल्य २५-००

२९. **महाभाष्य**-हिन्दी व्याख्या, यु० मी०। प्रथम भाग ५०-००, द्वितीय भाग २५-००, तृतीय भाग २५-००

३०. **उणादिकोष**—ऋ० द० स० कृत व्याख्या, तथा पं० यु० मी० कृत टिप्पणियों, एवं ११ सूचियों सहित। अजिल्द १०-००, सजिल्द १२-००

३१. **दैवम् पुरुषकारवार्त्तिकोपेतम्**-लीलाशुकमुनि कृत। १०-००

३२. **भागवृत्तिसंकलनम्**—अष्टाध्यायी की प्राचीन वृत्ति। ६-००

३३. **काशकृत्स्न-धातु-व्याख्यानम्**—संस्कृत रूपान्तर। यु० मी० १५-००

३४. **संस्कृत-धातुकोश**—पाणिनीय धातुओं का हिन्दी में अर्थ निर्देश। सं० युधिष्ठिर मीमांसक। १०-००

## अध्यात्म-विषयक ग्रन्थ

३५. **आर्याभिविनय (हिन्दी)**—स्वामी दयानन्द। गुटका सजिल्द मूल्य ४-००

३६. **Aryabhivinaya**—English translation and notes (स्वामी भूमानन्द) दोरङ्गी छपाई। अजिल्द ४-००, सजिल्द ६-००

३७. **विष्णुसहस्रनाम-स्त्रोत्रम् (सत्यभाष्य सहितम्)**—पं० सत्यदेव वासिष्ठ कृत आध्यात्मिक वैदिक भाष्य (४ भाग)। प्रति भाग १५-००

३८. **श्रीमद्भगवद्-गीता-भाष्यम्**—श्री पं० तुलसीराम स्वामी ६-०० ।

## नीतिशास्त्र-इतिहास-विषयक ग्रन्थ

३९. **शुक्रनीतिसार**—व्याख्याकार श्री स्वा० जगदीशानन्द जी सरस्वती । विस्तृत विषय सूची तथा श्लोक-सूची सहित । उत्तम कागज,सुन्दर छपाई तथा जिल्द सहित । मूल्य ४५ ००

४०. **सत्याग्रह-नीति-काव्य**—आ० स० सत्याग्रह १९३९ ई० में हैदराबाद जेल में पं० सत्यदेव वासिष्ठ द्वारा विरचित । हिन्दी व्याख्या सहित । ५-००

४१. **संस्कृत व्याकरणशास्त्र का इतिहास**–युधिष्ठिर मीमांसक कृत । **अप्राप्य** । नया संस्करण छप रहा है ।

४२. **संस्कृत व्याकरण गणपाठ की परम्परा और आचार्य पाणिनि**—लेखक–डा० कपिलदेव शास्त्री एम० ए० । सजिल्द १५-००

४३. **ऋषि दयानन्द के पत्र और विज्ञापन**—इस बार इस में ऋषि दयानन्द के अनेक नये उपलब्ध पत्र और विज्ञापन संगृहीत किये गए हैं । इस बार यह संग्रह चार भागों में छप रहा है । प्रथम दो भागों में ऋ० द० के पत्र और विज्ञापन आदि संगृहीत हैं । तीसरे और चौथे भाग में विविध व्यक्तियों द्वारा ऋ० द० को भेजे गये पत्रों का संग्रह है । प्रथम भाग—३५-००, दूसरा भाग ३५-००, तीसरा भाग ३५-००, चौथा भाग छप रहा है ।

४४. **विरजानन्द-चरित**—लेखक=पं० भीमसेन शास्त्री एम० ए० । नया परिवर्धित और शुद्ध संस्करण । मूल्य ३-००

४५. **ऋषि दयानन्द और आर्यसमाज की संस्कृत-साहित्य को देन**–लेखक–डा० भवानीलाल भारतीय एम० ए० । सजिल्द १५-००

## दर्शन-आयुर्वेद-विषयक ग्रन्थ

४६. **मीमांसा-शाबर-भाष्य**—आर्षमतविमर्शिनी हिन्दी व्याख्या । व्याख्याकार—युधिष्ठिर मीमांसक । प्रथम भाग—मूल्य ४०-००; द्वितीय भाग ३०-००; तृतीय भाग ५०-००; चौथा भाग यन्त्रस्थ ।

४७. **नाडी-तत्त्वदर्शनम्**—श्री पं० सत्यदेव जी वासिष्ठ । ३०-००

**रामलाल कपूर ट्रस्ट**
बहालगढ़, जिला—सोनीपत (हरियाणा) १३१०२१